द्वेधा ज्येष्ठा कनिष्ठा चेत्यमुग्धा द्वादशोदिताः ॥ १८ ॥

मध्याप्रगल्भाभेदानां प्रत्येकं ज्येष्ठाकनिष्ठात्वभेदेन द्वादश भेदा भवन्ति। मुग्धा त्वेकरूपैव। ज्येष्ठाकनिष्ठे। यथाऽमरुशतके।

दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्याऽऽदराद्
एकस्या नयने निमील्य विहितक्रीडानुबन्धच्छलः।
ईषद्वक्रितकन्धरः सपुलकः प्रेमोल्लसन्मानसाम्
अन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति ॥

न चाऽनयोर्दाक्षिण्यप्रेमभ्यामेव व्यवहारः। अपितु प्रेम्णाऽपि। यथा चैतत् तथोक्तं दक्षिणलक्षणावसरे। [एषां च धीरमध्याधीरमध्याधीराधीरमध्याधीरप्रगल्भाधीरप्रगल्भाधीराधीरप्रगल्भाभेदानां प्रत्येकं ज्येष्ठाकनिष्ठाभेदात् द्वादशानां वासवदत्तारत्नावलीवत् प्रबन्धनायिकानामुदाहरणानि महाकविप्रबन्धेष्वनुसर्तव्यानि।]

अथाऽन्यस्त्री।

अन्यस्त्री कन्यकोढा च नाऽन्योढाऽङ्गिरसे क्वचित्।
कन्यानुरागमिच्छातः कुर्यादङ्गाङ्गिसंश्रयम् ॥ १९ ॥

नायकान्तरसम्बन्धिनी अन्योढा। यथा।

दृष्टिं हे प्रतिवेशिनि क्षणमिहाऽप्यस्मिन् गृहे दास्यसि
प्रायेणाऽस्य शिशोः पिता न विरसाः कौपीरपः पास्यति।
एकाकिन्यपि यामि तद् वरमितः स्रोतस्तमालाकुलं
नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदा नलग्रन्थयः ॥

इयं त्वङ्गिनि प्रधाने रसे न क्वचिन् निबन्धनीयेति न

प्रपञ्चिता। कन्यका तु पित्राद्यायत्तत्वादपरिणीताऽप्यन्यस्त्रीत्यु-च्यते। तस्यां पित्रादिभ्योलभ्यमानायां सुलभायामपि परो-परोधस्वकान्ताभयात् प्रच्छन्नं कामित्वं प्रवर्तते। यथा माल-त्यां माधवस्य सागरिकायां च वत्सराजस्येति। तदनुरागस्तु स्वेच्छया प्रधानाप्रधानरससमाश्रयो निबन्धनीयः। यथा र-त्नावलीनागानन्दयोः सागरिकामलयवत्यनुराग इति।

**साधारणस्त्री गणिका कलाप्रागल्भ्यधौर्त्ययुक्।**

तद्व्यवहारो विस्तरतः शास्त्रान्तरे निदर्शितः। दिङ्मात्रं तु।

**छन्नकामसुखार्थाज्ञस्वतन्त्राहंयुपण्डकान्॥ २०॥**
**रक्तेव रञ्जयेदाढ्यान् निःस्वान् मात्रा विवासयेत्।**

छन्नं ये कामयन्ते ते छन्नकामाः श्रोत्रियवणिक्लिङ्गिप्रभृ-तयः। सुखार्थोऽप्रयासावाप्तधनः सुखप्रयोजनो वा। अज्ञो मूर्खः। स्वतन्त्रो निरङ्कुशः। अहंयुरहङ्कृतः। पण्डको वात-पण्डादिः। एतान् बहुवित्तान् रक्तेव रञ्जयेदर्थार्थम्। तत्प्र-धानत्वात् तद्वृत्तेः। गृहीतार्थान् कुट्टन्यादिना निष्कासयेत् पुनः प्रतिसन्धानाय। इदं तासामौत्सर्गिकं रूपम्।

रूपकेषु तु।

**रक्तैव त्वप्रहसने नैषा दिव्यनृपाश्रये॥ २१॥**

प्रहसनवर्जिते प्रकरणादौ रक्तैवैषा विधेया। यथा मृ-च्छकटिकायां वसन्तसेना चारुदत्तस्य। प्रहसने त्वरक्ताऽपि हास्यहेतुत्वात्। नाटकादौ तु दिव्यनृपनायके नैव विधेया।

M 2

अथ भेदान्तराणि ।

आसामष्टाववस्थाः स्युः स्वाधीनपतिकादिकाः ।

स्वाधीनपतिका वासकसज्जा विरहोत्कण्ठिता खण्डिता कलहान्तरिता विप्रलब्धा प्रोषितप्रियाऽभिसारिकेत्यष्टौ स्वस्त्रीप्रभृतीनामवस्थाः। नायिकाप्रभृतीनामप्यवस्थारूपत्वे सत्यवस्थान्तराभिधानं पूर्वासां धर्मित्वप्रतिपादनायाऽष्टाविति न्यूनाधिकव्यवच्छेदः। न च वासकसज्जादेः स्वाधीनपतिकादावन्तर्भावः। अनासन्नप्रियत्वाद् वासकसज्जाया न स्वाधीनपतिकात्वम्। यदि चैवं प्रियाऽपि स्वाधीनपतिका प्रोषितप्रियाऽपि न पृथग् वाच्या। न चैवता व्यवधानेनाऽऽसक्तिरिति नियन्तुं शक्यम्। न चाऽविदितप्रियव्यलीकाया: खण्डितात्वं नाऽपि प्रवृत्तरतिभोगेच्छायाः प्रोषितप्रियात्वं स्वयमगमनान् नायकं प्रत्यप्रयोजकत्वान् नाऽभिसारिकात्वम्। एवमुत्कण्ठिताऽप्यन्यैव पूर्वाभ्यः। औचित्यप्राप्तप्रियागमनसमयातिवृत्तिविधुरा न वासकसज्जा। तथा विप्रलब्धाऽपि वासकसज्जावदन्यैव पूर्वाभ्यः। उक्त्वा नायात इति प्रतारणाधिक्याच् च वासकसज्जोत्कण्ठितयोः पृथक्। कलहान्तरिता तु यद्यपि विदितव्यलीका तथाऽप्यगृहीतप्रियानुनया पश्चात्तापप्रकाशितप्रसादा पृथगेव खण्डितायाः। तत् स्थितमेतदष्टावस्था इति।

तत्र।

आसन्नायत्तरमणा हृष्टा स्वाधीनभर्तृका ॥ २२ ॥

यथा।

मा गर्वमुद्वह कपोलतले चकास्ति
कान्तस्वहस्तलिखिता मम मञ्जरीति।
अन्याऽपि किं न सखि भाजनमीदृशानां
वैरी न चेद् भवति वेपथुरन्तरायः॥

अथ वासकसज्जा।

मुदा वासकसज्जा स्वं मण्डयत्येष्यति प्रिये।

स्वमात्मानं वेश्म च हर्षेण भूषयत्येष्यति प्रिये। वासकसज्जा यथा।

निजपाणिपल्लवतटस्खलनाद्
अभिनासिकाविवरमुत्पतितैः।
अपरा परीक्ष्य शनकैर्मुमुदे
मुखवासमास्यकमलश्वसनैः॥

अथ विरहोत्कण्ठिता।

चिरयत्यव्यलीके तु विरहोत्कण्ठितोन्मनाः॥ २३॥

यथा।

सखि स विजितो वीणावाद्यैः कयाऽप्यपरस्त्रिया
पणितमभवत् ताभ्यां तत्र क्षपाललितं ध्रुवम्।
कथमितरथा सेफालीषु स्खलत्कुसुमास्वपि
प्रसरति नभोमध्येऽपीन्दौ प्रियेण विलम्ब्यते॥

अथ खण्डिता।

ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता।

यथा।

नवनखपदमङ्गं गोपयस्यंशुकेन
स्थगयसि पुनरोष्ठं पाणिना दन्तदष्टम्।
प्रतिदिशमपरस्त्रीसङ्गशंसी विसर्पन्
नवपरिमलगन्धः केन शक्यो वरीतुम्॥

अथ कलहान्तरिता।

कलहान्तरिताऽमर्षाद् विधूतेऽनुशयार्तियुक्॥ २४॥

यथा।

निःश्वासा वदनं दहन्ति हृदयं निर्मूलमुन्मथ्यते
निद्रा नैति न दृश्यते प्रियमुखं नक्तन्दिवं रुद्यते।
अङ्गं शोषमुपैति पादपतितः प्रेयांस्तथोपेक्षितः
सख्यः कं गुणमाकलय्य दयिते मानं वयं कारिताः॥

अथ विप्रलब्धा।

विप्रलब्धोक्तसमयमप्राप्तेऽतिविमानिता।

यथा।

उत्तिष्ठ दूति यामो यामो यातस्तथापि नाऽऽयातः।
याऽतः परमपिजोवेज् जीवितनाथो भवेत् तस्याः॥

अथ प्रोषितप्रिया।

दूरदेशान्तरस्थे तु कार्यतः प्रोषितप्रिया।

यथाऽमरुशतके।

आदृष्टिप्रसरात् प्रियस्य पदवीमुद्वीक्ष्य निर्विण्णया
विश्रान्तेषु पथिष्वहःपरिणतौ ध्वान्ते समुत्सर्पति।

इत्यैकं मधुचा ग्टहं प्रति पदं पान्थस्त्रियाऽस्मिन् क्षणे
माऽभूदागत इत्यमन्दवलितग्रीवं पुनर्वीक्षितम् ॥

अथाऽभिसारिका ।

**कामार्ताऽभिसरेत् कान्तं सारयेद् वाऽभिसारिका ॥२५॥**

यथाऽमरुशतके ।

उरसि निहितस्तारो हारः कृता जघने घने
कलकलवती काञ्ची पादौ रणन्मणिनूपुरौ ।
प्रियमभिसरस्येवं मुग्धे समाहतडिण्डिमा
यदि किमधिकत्रासोत्कम्पं दिशः समुदीक्षसे ॥

यथा च ।

न च मेऽवगच्छति यथा लघुतां
करुणां यथा च कुरुते स मयि ।
निपुणं तथैनमुपगम्य वदेर्
अभिदूति काचिदिति सन्दिदिशे ॥

तच्च ।

**चिन्तानिःश्वासखेदाश्रुवैवर्ण्यग्लान्यभूषणैः ।**
**युक्ताः षडन्त्या द्वे चाऽऽद्ये क्रीडौज्ज्वल्यप्रहर्षितैः ॥ २६ ॥**

परस्त्रियौ तु कन्यकोढे। सङ्केतात् पूर्वं विरहोत्कण्ठिते पश्चाद् विदूषकादिना सहाऽभिसरन्त्यावभिसारिके। कुतोऽपि सङ्केतस्थानमप्राप्ते नायके विप्रलब्धे इति व्यवस्थितैवाऽनयो-रिति। अस्वाधीनप्रिययोरवस्थान्तरायोगात्। यत् तु माल-

विकाग्निमित्रादौ योऽप्येवं धीरः सोऽपि दृष्टो देव्याः पुरत इति मालविकावचनानन्तरम्। राजा।

दाक्षिण्यं नाम बिम्बोष्ठि नायकानां कुलव्रतम्।
तन् मे दीर्घाक्षि ये प्राणास्ते त्वदाशानिबन्धनाः॥

इत्यादि तन् न खण्डितानुनयाभिप्रायेणाऽपितु सर्वथा मम देव्यधीनत्वमाशङ्क्य निराशा माभूदिति कन्याविस्रम्भणायेति। तथाऽनुपसञ्जातनायकसमागमाया देशान्तरव्यवधानेऽप्युत्कण्ठितात्वमेवेति न प्रोषितप्रियात्वमनायत्तप्रियत्वादेवेति॥

अथाऽऽसां सहायिन्यः।

दूत्यो दासी सखी कारुर्धात्रेयी प्रतिवेशिका।
लिङ्गिनी शिल्पिनी स्वं च नेतृमित्रगुणान्विताः॥ २७॥

दासी परिचारिका। सखी स्नेहनिबद्धा। कारुः रजकीप्रभृतिः। धात्रेयी उपमातृसुता। प्रतिवेशिका प्रतिगृहिणी। लिङ्गिनी भिक्षुक्यादिका। शिल्पिनी चित्रकारादिस्त्री। स्वयं चेति दूतीविशेषाः। नायकमित्राणां पीठमर्दादीनां निसृष्टार्थत्वादिना गुणेन युक्ताः। तथा च मालतीमाधवे कामन्दकीं प्रति।

शास्त्रेषु निष्ठा सहजश्च बोधः प्रागल्भ्यमभ्यस्तगुणा च वाणी।
कालानुरोधः प्रतिभानवत्त्वमेते गुणाः कामदुघाः क्रियासु॥

तत्र सखी। यथा।

मृगशिशुदृशस्तस्यास्तापं कथं कथयामि ते
दहनपतिता दृष्टा मूर्तिर्मया न हि वैधवी।

इति तु विदितं नारीरूपः स लोकदृशां सुधा।
तव शठतया शिल्पोत्कर्षो विधेर्विघटिष्यते॥

यथा च।

*सच्चं जाणइ दट्ठुं सरिसम्मि जणम्मि जुज्जए राओ।
मरउ ण तुमं भणिस्सं मरणं पि सलाहणिज्जं से॥

स्वयं दूती। यथा।

†मऊ एहि किं णिवालअ हरसि णिअं वाउ जइ वि मे सिचअं।
साहेमि कस्स सुन्दर दूरे गामो अहं एक्का॥

इत्याद्यूह्यम्।

अथ योषिदलङ्काराः।

**यौवने सत्त्वजाः स्त्रीणामलङ्कारास्तु विंशतिः।**

यौवने सत्त्वोद्भूता विंशतिरलङ्काराः स्त्रीणां भवन्ति।

तत्र।

**भावो हावश्च हेला च त्रयस्तत्र शरीरजाः॥ २८॥**
**शोभा कान्तिश्च दीप्तिश्च माधुर्यं च प्रगल्भता।**
**औदार्यं धैर्यमित्येते सप्त भावा अयत्नजाः॥ २९॥**

तत्र भावहावहेलास्त्रयोऽङ्गजाः। शोभा कान्तिर्दीप्तिर्माधुर्यं प्रागल्भ्यमौदार्यं धैर्यमित्ययत्नजाः सप्त।

---

* सत्यं जानाति द्रष्टुं सदृशे जने युज्यते रागः।
म्रियतां न त्वां भणिष्यामि मरणमपि श्लाघनीयमस्याः॥

† मुकरेहि किं निवारक हरसि निजं वायो यद्यपि मे सिचयं।
साधयामि कस्य सुन्दर दूरे ग्रामोऽहमेका॥

लीला विलासो विच्छित्तिर्विभ्रमः किलकिञ्चितम्।
मोट्टायितं कुट्टमितं बिब्बोको ललितं तथा।
विहृतं चेति विज्ञेया दश भावाः स्वभावजाः ॥ ३० ॥

तानेव निर्दिशति।

निर्विकारात्मकात् सत्त्वाद् भावस्तत्राऽऽद्यविक्रिया।

तत्र विकारहेतौ सत्यपि अविकारकं सत्त्वम्। यथा कुमारसम्भवे।

श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्
हरः प्रसङ्ख्यानपरो बभूव।
आत्मेश्वराणां न हि जातु विघ्नाः
समाधिभेदप्रभवो भवन्ति ॥

तस्मादविकाररूपात् सत्त्वाद् यः प्रथमो विकारोऽन्तर्विपरिवर्ती बीजस्योच्छूनतेव स भावः। यथा।

दृष्टिः सालसतां बिभर्ति न शिशुक्रीडासु बद्धादरा
श्रोत्रे प्रेषयति प्रवर्तितसखीसम्भोगवार्तास्वपि।
पुंसामङ्कमपेतशङ्कमधुना नाऽऽरोहति प्राक् यथा
बाला नूतनयौवनव्यतिकरावष्टभ्यमाना शनैः ॥

यथा वा कुमारसम्भवे।

हरस्तु किञ्चित् परिलुप्तधैर्यश्
चन्द्रोदयारम्भ इवाऽम्बुराशिः।
उमामुखे बिम्बफलाधरोष्ठे
व्यापारयामास विलोचनानि ॥

यथा वा ममैव।

*तं चिअ वअणं ते चेअ लोअणे जोव्वणं पि तं चेअ।

अण्णा अणङ्गलच्छी अण्णं चिअ किं पि साहेइ॥

अथ हावः।

हेवाकसस्तु शृङ्गारो हावोऽक्षिभ्रूविकारकृत्॥ ३१॥

प्रतिनियताङ्गविकारकारी शृङ्गारः स्वभावविशेषो हावः। यथा ममैव।

†जं किं पि पेच्छमाणं भणमाणं रे जहा तह चेअ।

णिज्झाअ णेहमुद्धं वअस्स मुद्धं णिअच्छेहि॥

अथ हेला।

स एव हेला सुव्यक्तशृङ्गाररससूचिका।

हाव एव स्पष्टभूयोविकारत्वात् सुव्यक्तशृङ्गाररससूचको हेला। यथा ममैव।

‡तह झत्ति से पअत्ता सव्वङ्गं विब्भमा थणुब्भेए।

संसइअवालभावा होइ चिरं जह सहीणं पि॥

अथाऽयत्नजाः सप्त। तत्र शोभा।

---

* तदेव वचनं ते चैव लोचने यौवनमपि तदेव।
अन्यानङ्गलक्ष्मीरन्यदेव किमपि साधयति॥

† यत् किमपि प्रेक्षमाणां भणमानां रे यथा तथैव।
निर्ध्याय स्नेहमुग्धां वयस्य मुग्धां पश्य॥

‡ तथा झटित्यस्याः प्रवृत्ताः सर्वाङ्गं विभ्रमाः स्तनोद्भेदे।
संशयितबालभावा भवति चिरं यथा सखीनामपि॥

रूपोपभोगतारुण्यैः शोभाऽङ्गानां विभूषणम् ॥ ३२ ॥

यथा कुमारसम्भवे ।

तां प्राङ्मुखीं तत्र निवेश्य बालां
क्षणं व्यलम्बन्त पुरो निषण्णाः ।
भूतार्थशोभाह्रियमाणनेत्राः
प्रसाधने सन्निहितेऽपि नार्यः ॥

इत्यादि । यथा च शाकुन्तले ।

अनाघ्रातं पुष्पं किसलयमलूनं कररुहैर्
अनाविद्धं रत्नं मधु नवमनास्वादितरसम् ।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ॥

अथ कान्तिः ।

मन्मथावापितच्छाया सैव कान्तिरिति स्मृता ।

शोभैव रागावतारघनीकृता कान्तिः । यथा ।

उन्मीलद्वदनेन्दुदीप्तिविसरैर्दूरे समुत्सारितं
भिन्नं पीनकुचस्थलस्य च रुचा हस्तप्रभाभिर्हतम् ।
एतस्याः कलविङ्ककण्ठकदलीकल्पं मिलत्कौतुकाद्
अप्राप्ताङ्गसुखं रुषेव सहसा केशेषु लग्नं तमः ॥

यथा हि महाश्वेतावर्णनावसरे भट्टबाणस्य ।

अथ माधुर्यम् ।

अनुल्बणत्वं माधुर्यं

यथा शाकुन्तले।

सरसिजमनुविद्धं शैवलेनाऽपि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति।
इयमधिकमनोज्ञा वल्कलेनाऽपि तन्वी
किमिव हि मधुराणां मण्डनं नाऽऽकृतीनाम्॥

अथ दीप्तिः।

दीप्तिः कान्तेस्तु विस्तरः॥ ३३॥

यथा।

*देव्वा पसिअ णिअत्तसुमुहससिजोण्हाविलुत्ततमणिवहे।
अहिसारिआण विग्घं करेसि अण्णाण विहआसे॥

अथ प्रागल्भ्यम्।

निःसाध्वसत्वं प्रागल्भ्यं

मनःक्षोभपूर्वकोऽङ्गसादः साध्वसं तदभावः प्रागल्भ्यम्।

यथा ममैव।

तथा व्रीडाविधेयाऽपि तथा मुग्धाऽपि सुन्दरी।
कलाप्रयोगचातुर्ये सभास्वाचार्यकं गता॥

अथौदार्यम्।

औदार्यं प्रश्रयः सदा।

यथा।

---

* दैवात् दृष्ट्वा नितान्तसुमुखशशिज्योत्स्नाविलुप्ततमोनिवहे।
अभिसारिकाणां विघ्नं करोषि अन्यासां विहताशे॥

*दिअहं खु दुक्खिआए सअलं काऊण गेहवावारं।
गरुएवि मण्णुदुक्खे भरिमो पाअन्तसुत्तस्स॥

यथा वा। भ्रूभङ्गे सहसोद्गतेत्यादि।

अथ धैर्यम्।

चापलाविहता धैर्यं चिद्वृत्तिरविकत्थना॥ ३४॥

चापलानुपहता मनोवृत्तिरात्मगुणानामनाख्यायिका धैर्यमिति। यथा मालतीमाधवे।

ज्वलतु गगने रात्रौ रात्रावखण्डकलः शशी
दहतु मदनः किंवा मृत्योः परेण विधास्यति।
मम तु दयितः श्लाघ्यस्तातो जनन्यमलान्वया
कुलममलिनं न त्वेवाऽयं जनो न च जीवितम्॥

अथ स्वाभाविका दश। तत्र।

प्रियानुकरणं लीला मधुराङ्गविचेष्टितैः।

प्रियकृतानां वाग्वेषचेष्टानां शृङ्गारिणीनामङ्गनाभिरनुकरणं लीला। यथा ममैव।

†तह दिट्ठं तह भणिअं ताए णिअदं तहा तहा सीणं।
अवलोइअं सइण्हं सविब्भमं जह सवत्तीहिं॥

यथा वा।

---

* दिवसं खलु दुःखितायाः सकलं कृत्वा गृहव्यापारं।
गुरुण्यपि मन्युदुःखे भरिमा पादान्ते सुप्तस्य॥

† तथा दृष्टं तथा भणितं तया नियतं तथा तथ प्रीणं।
अवलोकितं सतृष्णं सविभ्रमं यथा सपत्नीभिः॥

तेनोदितं वदति याति तथा यथाऽसौ।

इत्यादि।

अथ विलासः।

तात्कालिको विशेषस्तु विलासोऽङ्गक्रियादिषु॥ ३५॥

दयितावलोकनादिकालेऽङ्गे क्रियायां वचने च सातिशय-विशेषोत्पत्तिर्विलासः। यथा मालतीमाधवे।

अत्राऽन्तरे किमपि वाग्विभवातिवृत्त-
वैचित्र्यमुल्लसितविभ्रममायताक्ष्याः।
तद् भूरिसात्त्विकविकारविशेषरम्यम्
आचार्यकं विजयि मान्मथमाविरासीत्॥

अथ विच्छित्तिः।

आकल्परचनाऽल्पाऽपि विच्छित्तिः कान्तिपोषकृत्।

स्तोकोऽपि वेषो बहुतरकमनीयताकारी विच्छित्तिः। यथा कुमारसम्भवे।

कर्णार्पितो रोध्रकषायरूक्षे
गोरोचनाभेदनितान्तगौरे।
तस्याः कपोले परभागलाभाद्
बबन्ध चक्षूंषि यवप्ररोहः॥

अथ विभ्रमः।

विभ्रमस्त्वरया काले भूषास्थानविपर्ययः॥ ३६॥

यथा।

अभ्युद्गते शशिनि पेशलकान्तदूती-
संलापसंवलितलोचनमानसाभिः।
अग्राहि मण्डनविधिर्विपरीतभूषा-
विन्यासहासितसखीजनमङ्गनाभिः॥

यथा वा ममैव।

श्रुत्वाऽऽयातं बहिः कान्तमसमाप्तविभूषया।
भालेऽञ्जनं दृशोर्लाक्षा कपोले तिलकः कृतः॥

अथ किलकिञ्चितम्।

**क्रोधाश्रुहर्षभीत्यादेः सङ्करः किलकिञ्चितम्।**

यथा ममैव।

रतिक्रीडाद्यूते कथमपि समासाद्य समयं
मया लब्धे तस्याः क्वणितकलकण्ठार्धमधरे।
कृतभ्रूभङ्गाऽसौ प्रकटितविलक्षार्धरुदित-
स्मितक्रोधोद्भ्रान्तं पुनरपि विदध्यान् मयि मुखम्॥

अथ मोट्टायितम्।

**मोट्टायितं तु तद्भावभावनेष्टकथादिषु॥ ३७॥**

इष्टकथादिषु प्रियतमकथानुकरणादिषु प्रियानुरागेण भावितान्तःकरणत्वं मोट्टायितम्। यथा पद्मगुप्तस्य।

चित्रवर्तिन्यपि नृपे तत्त्वावेशेन चेतसि।
व्रीडार्धवलितं चक्रे मुखेन्दुमवशैव सा॥

यथा वा।

मातः कं हृदये निधाय सुचिरं रोमाञ्चिताङ्गी मुहुर्
जृम्भामन्थरतारकां सुललितापाङ्गां दधाना दृशम्।
सुप्तेवाऽऽलिखितेव शून्यहृदया लेखावशेषीभव-
त्यात्मद्रोहिणि किं ह्रिया कथय मे गूढो निहन्ति स्मरः॥

यथा वा ममैव।

स्मरदवथुनिमित्तं गूढमुन्नेतुमस्याः
सुभग तव कथायां प्रस्तुतायां सखीभिः।
भवति विततपृष्ठोदस्तपीनस्तनाग्रा
ततवलयितबाहुर्जृम्भितैः साङ्गभङ्गैः॥

अथ कुट्टमितम्।

सानन्दाऽन्तः कुट्टमितं कुप्येत् केशाधरग्रहे।

यथा।

नान्दीपदानि रतिनाटकविभ्रमाणाम्
आज्ञाक्षराणि परमाण्यथवा स्मरस्य।
दष्टेऽधरे प्रणयिना विधुताग्रपाणेः
सीत्कारशुष्करुदितानि जयन्ति नार्याः॥

अथ विब्बोकः।

गर्वाभिमानादिष्टेऽपि विब्बोकोऽनादरक्रिया॥ ३८॥

यथा ममैव।

सव्याजं तिलकालकान् विरलयल् लोलाङ्गुलिः संस्पृशन्
वारं वारमुदञ्चयन् कुचयुगप्रोदञ्चिनीलाञ्चलम्।
यद् भ्रूभङ्गतरङ्गिताञ्चितदृशा सावज्ञमालोकितम्

तद्गर्वादवधीरितोऽस्मि न पुनः कान्ते कृतार्थीकृतः ॥

अथ ललितम्।

**सुकुमाराङ्गविन्यासो मसृणो ललितं भवेत्।**

यथा ममैव।

सभ्रूभङ्गं करकिसलयावर्तनैरालपन्ती
सा पश्यन्ती ललितललितं लोचनस्याऽञ्चलेन।
विन्यस्यन्ती चरणकमले लीलया स्वैरयातैर्
निःसङ्गीतं प्रथमवयसा नर्तिता पङ्कजाक्षी ॥

अथ विहृतम्।

**प्राप्तकालं न यद् ब्रूयाद् व्रीडया विहृतं हि तत्॥ ३९॥**

प्राप्तावसरस्याऽपि वाक्यस्य लज्जया यदवचनं तद् विहृतम्। यथा।

पादाङ्गुष्ठेन भूमिं किसलयरुचिना सापदेशं लिखन्ती
भूयो भूयः क्षिपन्ती मयि सितशबले लोचने लोलतारे।
वक्त्रं ह्रीनम्रमीषत्स्फुरदधरपुटं वाक्यगर्भं दधाना
यन्मां नोवाच किञ्चित् स्थितमपि हृदये मानसं तद् दुनोति॥

अथ नेतुः कार्यान्तरसहायानाह।

**मन्त्री स्वं वोभयं वाऽपि सखा तस्याऽर्थचिन्तने।**

तस्य नेतुरर्थचिन्तायां तन्त्रावापादिलक्षणायां मन्त्री वाऽऽत्मा वोभयं वा सहायः।

तत्र विभागमाह।

मन्त्रिणा ललितः शेषा मन्त्रिस्वायत्तसिद्धयः ॥ ४० ॥

उक्तलक्षणो ललितो नेता मन्त्र्यायत्तसिद्धिः। शेषा धीरोदात्तादयः। अनियमेन मन्त्रिणा स्वेन वोभयेन वाऽङ्गीकृतसिद्धय इति।

धर्मसहायास्तु।

ऋत्विक्पुरोहितौ धर्मे तपस्विब्रह्मवादिनः।

ब्रह्म वेदस्तं वदन्ति व्याचक्षते वा तच्छीला ब्रह्मवादिनः। आत्मज्ञानिनो वा। शेषाः प्रतीताः।

दुष्टदमनं दण्डस्तत्सहायास्तु।

सुहृत्कुमाराटविका दण्डे सामन्तसैनिकाः ॥ ४१ ॥

स्पष्टम्। एवं तत्तत्कार्यान्तरेषु सहायान्तराणि योज्यानि।

यदाह।

अन्तःपुरे वर्षवराः किराता मूकवामनाः।

म्लेच्छाभीरशकाराद्याः स्वस्वकार्योपयोगिनः ॥ ४२ ॥

शकारो राज्ञः श्यालो हीनजातिः।

विशेषान्तरमाह।

ज्येष्ठमध्याधमत्वेन सर्वेषां च त्रिरूपता।

तारतम्याद् यथोक्तानां गुणानां चोत्तमादिता।

एवं प्रागुक्तानां नायकनायिकादूतदूतीमन्त्रिपुरोहितादीनामुत्तममध्यमाधमभावेन त्रिरूपता। उत्तमादिभावश्च न गुणसङ्ख्योपचयापचयेन किं तर्हि गुणातिशयतारतम्येन।

एवं नाट्ये विधातव्यो नायकः सपरिच्छदः ॥ ४३ ॥

उक्तो नायकस्तद्व्यापारस्तूच्यते।

तद्व्यापारात्मिका वृत्तिश्चतुर्धा तत्र कैशिकी।
गीतनृत्यविलासाद्यैर्मृदुः शृङ्गारचेष्टितैः।

प्रवृत्तिरूपो नेतृव्यापारस्वभावो वृत्तिः। सा च कैशिकी-सात्त्वत्यारभटीभारतीभेदात् चतुर्विधा। तासां गीतनृत्य-विलासकामोपभोगाद्युपलक्ष्यमाणो मृदुः शृङ्गारी कामफला-वच्छिन्नो व्यापारः कैशिकी।

सा तु।

नर्मतत्स्फिञ्जतत्स्फोटतद्गर्भैश्चतुरङ्गिका ॥ ४४ ॥

तदित्यनेन सर्वत्र नर्म परामृश्यते।

तत्र।

वैदग्ध्यक्रीडितं नर्म प्रियोपच्छन्दनात्मकम्।
हास्येनैव सशृङ्गारभयेन विहितं त्रिधा ॥ ४५ ॥
आत्मोपक्षेपसम्भोगमानैः शृङ्गार्यपि त्रिधा।
शुद्धमङ्गं भयं द्वेधा त्रेधा वाग्वेषचेष्टितैः।
सर्वं सहास्यमित्येवं नर्माऽष्टादशधोदितम् ॥ ४६ ॥

अग्राम्य इष्टजनावर्जनरूपः परिहासो नर्म। तच्च शुद्ध-हास्येन सशृङ्गारहास्येन सभयहास्येन च रचितं त्रिविधम्। शृङ्गारवदपि स्वानुरागनिवेदनसम्भोगेच्छाप्रकाशनसापराधप्रि-यप्रतिभेदनैस्त्रिविधमेव। भयनर्माऽपि शुद्धरसान्तराङ्गभावाद्

द्विविधम्। एवं षड्विधस्य प्रत्येकं वाग्वेषचेष्टाव्यतिकरेणाऽष्टादशविधत्वम्।

तत्र वचोहास्यनर्म यथा।

पत्युः शिरश्चन्द्रकलामनेन
स्पृशेति सख्या परिहासपूर्वम्।
सा रञ्जयित्वा चरणौ कृताशीर्
माल्येन तां निर्वचनं जघान॥

वेषनर्म यथा नागानन्दे विदूषकशेखरकव्यतिकरे। क्रियानर्म यथा मालविकाग्निमित्रे उत्स्वप्नायमानस्य विदूषकस्योपरि निपुणिका सर्पभ्रमकारणं दण्डकाष्ठं पातयति। एवं वक्ष्यमाणेष्वपि वाग्वेषचेष्टापरत्वमुदाहार्यम्।

शृङ्गारवदात्मोपक्षेपनर्म यथा।

मध्याह्नं गमय त्यज श्रमजलं स्थित्वा पयः पीयतां
मा शून्येति विमुञ्च पान्थ विवशः शीतः प्रपामण्डपः।
तामेव स्मर घस्मरस्मरशरत्रस्तां निजप्रेयसीं
त्वच्चित्तं तु न रञ्जयन्ति पथिक प्रायः प्रपापालिकाः॥

सम्भोगनर्म यथा।

*सालोए च्चिअ सूरे घरिणी घरसामिअस्स घेत्तूण।
णेच्छन्तस्स वि पाए धुअइ हसन्ती हसन्तस्स॥

माननर्म यथा।

---

* सालोके एव सूर्ये गृहिणी गृहस्वामिकस्य गृहीत्वा।
अनिच्छतोऽपि पादौ धुनोति हसन्ती हसतः॥

तदवितथमवादीर्यन् मम त्वं प्रियेति
प्रियजनपरिभुक्तं यद् दुकूलं दधानः।
मदधिवसति मागाः कामिनां मण्डनश्रीर्
व्रजति हि सफलत्वं वल्लभालोकनेन ॥

भयनर्म यथा रत्नावल्यामालेख्यदर्शनावसरे। सुसङ्गता। *जाणिदो मए एसो सव्वो वुत्तन्तो समं चित्तफलहएण ता देवीए णिवेदइस्समित्यादि।

शृङ्गाराङ्गं भयनर्म। यथा ममैव।

अभिव्यक्तालीकः सकलविफलोपायविभवश्
चिरं ध्यात्वा सद्यः कृतकृतकसंरम्भनिपुणम्।
इतः पृष्ठे पृष्ठे किमिदमिति सन्त्रास्य सहसा
कृताश्लेषं धूर्तः स्मितमधुरमालिङ्गति वधूम् ॥

अथ नर्मस्फिञ्जः।

**नर्मस्फिञ्जः सुखारम्भो भयान्तो नवसङ्गमे।**

यथा मालविकाग्निमित्रे सङ्केते नायकमभिसृतायां नायिकायां नायकः।

विसृज सुन्दरि सङ्गमसाध्वसं
ननु चिरात् प्रभृति प्रणयोन्मुखे।
परिगृहाण गते सहकारतां
त्वमतिमुक्तलताचरितं मयि ॥

---

* ज्ञातो मयैष सर्वो वृत्तान्तः सह चित्रफलकेन तत् देव्यै निवेदयिष्यामि।

मालविका। *भट्टा देवीए भयेण अत्तणो वि पिअं काउं ण पारेमीत्यादि।

अथ नर्मस्फोटः।

नर्मस्फोटस्तु भावानां सूचितोऽल्परसो लवैः ॥ ४७ ॥

यथा मालतीमाधवे। मकरन्दः।

गमनमलसं शून्या दृष्टिः शरीरमसौष्ठवं
श्वसितमधिकं किं न्वेतत् स्यात् किमन्यदतोऽथ वा।
भ्रमति भुवने कन्दर्पाज्ञा विकारि च यौवनं
ललितमधुरास्ते ते भावाः क्षिपन्ति च धीरताम् ॥

इत्यत्र गमनादिभिर्भावलेशैर्माधवस्य मालत्यामनुरागः स्तोकः प्रकाश्यते।

अथ नर्मगर्भः।

छन्ननेतृप्रतीचारो नर्मगर्भोऽर्थहेतवे।
अङ्गैः सहास्यनिर्हास्यैरेभिरेषाऽत्र कैशिकी ॥ ४८ ॥

यथाऽमरुशतके।

दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्याऽऽदराद्
एकस्या नयने निमील्य विहितक्रीडानुबन्धच्छलः।
ईषद्वक्रितकन्धरः सपुलकः प्रेमोल्लसन्मानसाम्
अन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति ॥

---

* भर्तः, देव्या भयेनात्मनोऽपि प्रियं कर्तुं न पारयामि।

यथा प्रियदर्शिकायां गर्भाङ्के वत्सराजवेषसुसङ्गतास्थाने साक्षाद् वत्सराजप्रवेशः।

अथ सात्त्वती।

विशोका सात्त्वती सत्त्वशौर्यत्यागदयार्जवैः।
संलापोत्थापकावस्यां साङ्घात्यः परिवर्तकः॥ ४९ ॥

शोकहीनः सत्त्वशौर्यत्यागदयाहर्षादिभावोत्तरो नायकव्यापारः सात्त्वती। तदङ्गानि च संलापोत्थापकसाङ्घात्यपरिवर्तकाख्यानि।

तत्र।

संलापको गभीरोक्तिर्नानाभावरसा मिथः।

यथा वीरचरिते। रामः। अयं स यः किल सपरिवारकार्त्तिकेयविजयावर्जितेन भगवता नीललोहितेन परिवत्सरसहस्रान्तेवासिने तुभ्यं प्रसादीकृतः परशुः। परशुरामः। राम राम दाशरथे स एवाऽयमाचार्यपादानां प्रियः परशुः।

शस्त्रप्रयोगखुरलीकलहे गणानां
सैन्यैर्वृतो विजित एव मया कुमारः।
एतावताऽपि परिरभ्य कृतप्रसादः
प्रादादमुं प्रियगुणो भगवान् गुरुर्मे॥

इत्यादिनानाप्रकारभावरसेन रामपरशुरामयोरन्योन्यगभीरवचसा संलाप इति।

अथोत्थापकः।

उत्थापकस्तु यत्राऽऽदौ युद्धायोत्थापयेत् परम् ॥ ५० ॥

यथा वीरचरिते।

आनन्दाय च विस्मयाय च मया दृष्टोऽसि दुःखाय वा
वैतृष्ण्यं नु कुतोऽद्य सम्प्रति मम त्वद्दर्शने चक्षुषः।
त्वत्साङ्गत्यसुखस्य नाऽस्मि विषयः किं वा बहुव्याहृतैर्
अस्मिन् विश्रुतजामदग्न्यविजये बाहौ धनुर्जृम्भताम् ॥

अथ साङ्घात्यः।

मन्त्रार्थदैवशक्त्यादेः साङ्घात्यः सङ्घभेदनम्।

मन्त्रशक्त्या। यथा मुद्राराक्षसे राक्षससहायादीनां चाणक्येन स्वबुद्ध्या भेदनम्। अर्थशक्त्या तत्रैव। यथा पर्वतकाभरणस्य राक्षसहस्तगमनेन मलयकेतुसहोत्थायिभेदनम्। दैवशक्त्या तु। यथा रामायणे रामस्य दैवशक्त्या रावणाद् विभीषणस्य भेद इत्यादि।

अथ परिवर्तकः।

प्रारब्धोत्थानकार्यान्यकरणात् परिवर्तकः ॥ ५१ ॥

प्रस्तुतस्योद्योगकार्यस्य परित्यागेन कार्यान्तरकरणं परिवर्तकः। यथा वीरचरिते।

हेरम्बदन्तमुसलोल्लिखितैकभित्ति-
वक्षो विशाखविशिखव्रणलाञ्छनं मे।
रोमाञ्चकञ्चुकितमद्भुतवीरलाभाद्
यत् सत्यमद्य परिरब्धुमिवेच्छति त्वाम् ॥

रामः। भगवन् परिरम्भणमिति प्रस्तुतप्रतीपमेतदित्यादि।

सात्त्वतीमुपसंहरन्नारभटीलक्षणमाह।

एभिरङ्गैश्चतुर्धेयं सात्त्वत्यारभटी पुनः।
मायेन्द्रजालसङ्ग्रामक्रोधोद्भ्रान्तादिचेष्टितैः।
सङ्क्षिप्तिका स्यात् सम्फेटो वस्तूत्थानावपातने॥ ५२॥

मायामन्त्रबलेनाऽविद्यमानवस्तुप्रकाशनम्। तन्त्रबलादिन्द्रजालम्।

तत्र।

सङ्क्षिप्तवस्तुरचना सङ्क्षिप्तिः शिल्पयोगतः।
पूर्वनेतृनिवृत्त्याऽन्ये नेत्रन्तरपरिग्रहः॥ ५३॥

मृद्वंशदलचर्मादिद्रव्ययोगेन वस्तूत्थापनं सङ्क्षिप्तिः। यथोदयनचरिते किलिञ्जहस्तिप्रयोगः। पूर्वनायकावस्थानिवृत्त्याऽवस्थान्तरपरिग्रहमन्ये सङ्क्षिप्तिकां मन्यन्ते। यथा वालिनिवृत्त्या सुग्रीवः। यथा च परशुरामस्यौद्धत्यनिवृत्त्या शान्तत्वापादनं पुण्या ब्राह्मणजातिरित्यादिना।

अथ सम्फेटः।

सम्फेटस्तु समाघातः क्रुद्धसंरब्धयोर्द्वयोः।

यथा माधवाघोरघण्टयोर्मालतीमाधवे। इन्द्रजिल्लक्ष्मणयोश्च रामायणप्रतिबद्धवस्तुषु।

अथ वस्तूत्थापनम्।

मायाद्युत्थापितं वस्तु वस्तूत्थापनमिष्यते।

यथोदात्तराघवे।

जीयन्ते जयिनोऽपि सान्द्रतिमिरव्रातैर्वियद्व्यापिभिर्
भास्वन्तः सकला रवेरपि रुचः कस्मादकस्मादमी।
एताश्चोग्रकबन्धरन्ध्ररुधिरैराध्मायमानोदरा
मुञ्चन्त्याननकन्दरानलमुचस्तीव्रा रवाः फेरवाः॥

इत्यादि।

अथाऽवपातः।

**अवपातस्तु निष्क्रामप्रवेशत्रासविद्रवैः॥ ५४॥**

यथा रत्नावल्याम्।

कण्ठे कृत्वाऽवशेषं कनकमयमधः शृङ्खलादाम कर्षन्
क्रान्त्वा द्वाराणि हेलावलचरणरणत्किङ्किणीचक्रवालः।
दत्तातङ्को गजानामनुसृतसरणिः सम्भ्रमादश्वपालैः
प्रभ्रष्टोऽयं प्लवङ्गः प्रविशति नृपतेर्मन्दिरं मन्दुरातः॥

नष्टं वर्षवरैर्मनुष्यगणनाभावादकृत्वा त्रपाम्
अन्तः कञ्चुकि कञ्चुकस्य विशति त्रासादयं वामनः।
पर्यन्ताश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृतं
कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाशङ्किनः।

यथा च प्रियदर्शनायां प्रथमेऽङ्के विन्ध्यकेतुवस्कन्दे।

उपसंहरति।

**एभिरङ्गैश्चतुर्धेयं नाऽर्थवृत्तिरतः परा।**
**चतुर्थी भारती साऽपि वाच्या नाटकलक्षणे॥ ५५॥**

कैशिकीं सात्त्वतीं चाऽर्थवृत्तिमारभटीमिति।
पठन्तः पञ्चमीं वृत्तिमौद्भटाः प्रतिजानते॥ ५६॥

सा तु लक्ष्ये क्वचिदपि न दृश्यते न चोपपद्यते रसेषु हास्यादीनां भारत्यात्मकत्वात्। नीरसस्य च काव्यार्थस्य चाऽभावात्। तिस्र एवैता अर्थवृत्तयः। भारती तु शब्दवृत्ति-रामुखाङ्गत्वात् तत्रैव वाच्या।

वृत्तिनियममाह।

शृङ्गारे कैशिकी वीरे सात्त्वत्यारभटी पुनः।
रसे रौद्रे च बीभत्से वृत्तिः सर्वत्र भारती॥ ५७॥

देशभेदभिन्नवेषादिस्तु नायकादिव्यापारः प्रवृत्तिरित्याह।

देशभाषाक्रियावेषलक्षणाः स्युः प्रवृत्तयः।
लोकादेवाऽवगम्यैता यथौचित्यं प्रयोजयेत्॥ ५८॥

तत्र पाठ्यं प्रति विशेषः।

पाठ्यं तु संस्कृतं नृणामनीचानां कृतात्मनाम्।
लिङ्गिनीनां महादेव्या मन्त्रिजावेश्ययोः क्वचित्॥ ५९॥

क्वचिदिति देवीप्रभृतीनां सम्बन्धः।

स्त्रीणां तु प्राकृतं प्रायः शूरसेन्यधमेषु च।

प्रकृतेरागतं प्राकृतम्। प्रकृतिः संस्कृतं तद्भवं तत्समं देशीत्यनेकप्रकारम्। शूरसेनी मागधी च स्वशास्त्रनियते।

पिशाचात्यन्तनीचादौ पैशाचं मागधं तथा ॥ ६० ॥

यद्देशं नीचपात्रं यत् तद्देशं तस्य भाषितम्।

कार्यतश्चोत्तमादीनां कार्यो भाषाव्यतिक्रमः ॥ ६१ ॥

स्पष्टार्थमेतत्।

आमन्त्र्यामन्त्रकौचित्येनाऽऽमन्त्रणमाह।

भगवन्तो वरैर्वाच्या विद्वद्देवर्षिलिङ्गिनः।

विप्रामात्याग्रजाश्चाऽऽर्या नटीसूत्रभृतौ मिथः ॥ ६२ ॥

आर्याविति सम्बन्धः।

रथी सूतेन चाऽऽयुष्मान् पूज्यैः शिष्यात्मजानुजाः।

वत्सेति तातः पूज्योऽपि सुगृहीताभिधस्तु तैः ॥ ६३ ॥

अपिशब्दात् पूज्येन शिष्यात्मजानुजास्तातेति वाच्याः। सोऽपि तैस्तातेति सुगृहीतनामा चेति।

भावोऽनुगेन सूत्री च मार्षेत्येतेन सोऽपि च।

सूत्रधारः पारिपार्श्वकेन भाव इति वक्तव्यः। स च सूत्रिणा मार्ष इति।

देवः स्वामीति नृपतिर्भृत्यैर्भट्टेति चाऽधमैः ॥ ६४ ॥

आमन्त्रणीयाः पतिवज् ज्येष्ठमध्याधमैः स्त्रियः।

विद्वद्देवादिस्त्रियो भर्तृवदेव देवरादिभिर्वाच्याः।

तत्र स्त्रियं प्रति विशेषः।

समा हलेति प्रेष्या च हञ्जे वेश्याऽज्जुका तथा ॥ ६५ ॥
कुट्टिन्यम्बेत्यनुगतैः पूज्या वा जरती जनैः ।
विदूषकेण भवती राज्ञी चेटीति शब्द्यते ॥ ६६ ॥

पूज्या जरती अम्बेति । स्पष्टमन्यत् ।

चेष्टागुणोदाहृतिसत्त्वभावान्
अशेषतो नेतृदशाविभिन्नान् ।
को वक्तुमीशो भरतो न यो वा
यो वा न देवः शशिखण्डमौलिः ॥ ६७ ॥

दिङ्मात्रं दर्शितमित्यर्थः । [चेष्टा लीलाद्याः गुणा विनयाद्याः उदाहृतयः संस्कृतप्राकृताद्या उक्तयः सत्त्वं निर्विकारात्मकं मनो भावः सत्त्वस्य प्रथमोविकारः तेन हावादयोऽप्युपलक्षिताः ।]

इति श्रीविष्णुसूनोर्धनिकस्य कृतौ दशरूपावलोके नेतृप्रकाशो नाम द्वितीयप्रकाशः समाप्तः ।

बहुवक्तव्यतया रसविचारातिलङ्घनेन वस्तुनेतृरसानां विभज्य नाटकादिषूपयोगः प्रतिपाद्यते।

**प्रकृतित्वादथाऽन्येषां भूयोरसपरिग्रहात्।**
**सम्पूर्णलक्षणत्वाच्च पूर्वं नाटकमुच्यते॥१॥**

उद्दिष्टधर्मकं हि नाटकमनुद्दिष्टधर्माणां प्रकरणादीनां प्रकृतिः। शेषं प्रतीतम्।

तत्र।

**पूर्वरङ्गं विधायाऽऽदौ सूत्रधारे विनिर्गते।**
**प्रविश्य तद्वदपरः काव्यमास्थापयेन्नटः॥२॥**

पूर्वं रज्यतेऽस्मिन्निति पूर्वरङ्गो नाट्यशाला। तत्स्थप्रथमप्रयोगव्युत्थापनादौ पूर्वरङ्गता। तं विधाय विनिर्गते प्रथमं सूत्रधारे तद्वदेव वैष्णवस्थानकादिना* प्रविश्याऽन्यो नटः काव्यार्थं स्थापयेत्। स च काव्यार्थस्थापनात् सूचनात् स्थापकः।

**दिव्यमर्त्ये स तद्रूपो मिश्रमन्यतरस्तयोः।**
**सूचयेद् वस्तु बीजं वा मुखं पात्रमथाऽपि वा॥३॥**

स स्थापको दिव्यं वस्तु दिव्यो भूत्वा मर्त्यं च मर्त्यरूपो भूत्वा मिश्रं च दिव्यमर्त्ययोरन्यतरो भूत्वा सूचयेत्। वस्तु बीजं मुखं पात्रं वा। वस्तु यथोदात्तराघवे।

---

* दीर्घपादविक्षेपेण परिक्रमो वैष्णवस्थानकम्। आदिशब्दात् ताण्डवादिना परिक्रमो रौद्रमिति कस्यचित् टिप्पणी।

रामो मूर्ध्नि निधाय काननमगान् मालामिवाऽऽज्ञां गुरोस्
तद्भक्त्या भरतेन राज्यमखिलं मात्रा सहैवोज्झितम्।
तौ सुग्रीवविभीषणावनुगतौ नीतौ परां सम्पदं
प्रोद्वृत्ता दशकन्धरप्रभृतयो ध्वस्ताः समस्ता द्विषः॥

बीजं यथा रत्नावल्याम्।

द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात्।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः॥

मुखं यथा।

आसादितप्रकटनिर्मलचन्द्रहासः
प्राप्तः शरत्समय एष विशुद्धकान्तः।
उत्खाय गाढतमसं घनकालमुग्रं
रामो दशास्यमिव सम्भृतबन्धुजीवः॥

पात्रं यथा शाकुन्तले।

तवाऽस्मि गीतरागेण हारिणा प्रसभं हृतः।
एष राजेव दुष्यन्तः सारङ्गेणाऽतिरंहसा॥

**रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः।**
**ऋतुं कञ्चिदुपादाय भारतीं वृत्तिमाश्रयेत्॥४॥**

रङ्गस्य प्रशस्तिं काव्यार्थानुगतार्थैः श्लोकैः कृत्वा।

औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताऽऽभिमुख्यं पुनः।

दृष्ट्वाऽग्रे वरमात्तसाध्वसरसा गौरी नवे सङ्गमे
संरोहत्पुलका हरेण हसता श्लिष्टा शिवा पातु वः॥

इत्यादिभिरेव भारतीं वृत्तिमाश्रयेत्।

सा तु।

भारती संस्कृतप्रायो वाग्व्यापारो नटाश्रयः।
भेदैः प्ररोचनायुक्तैर्वीथीप्रहसनामुखैः॥ ५॥

पुरुषविशेषप्रयोज्यः संस्कृतबहुलो वाक्प्रधानो नटाश्रयो व्यापारो भारती। प्ररोचना वीथीप्रहसनामुखानि चाऽस्या-ङ्गानि।

यथोद्देशं लक्षणमाह।

उन्मुखीकरणं तत्र प्रशंसातः प्ररोचना।

प्रस्तुतार्थप्रशंसनेन श्रोतॄणां प्रवृत्त्युन्मुखीकरणं प्ररोचना। यथा रत्नावल्याम्।

श्रीहर्षो निपुणः कविः परिषदप्येषा गुणग्राहिणी
लोके हारि च वत्सराजचरितं नाट्ये च दक्षा वयम्।
वस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पदं किं पुनर्
मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः॥

वीथी प्रहसनं चाऽपि स्वप्रसङ्गेऽभिधास्यते।
वीथ्यङ्गान्यामुखाङ्गत्वादुच्यन्तेऽत्रैव तत् पुनः॥ ६॥

सूत्रधारो नटीं ब्रूते मार्षं वाऽथ विदूषकम्।
स्वकार्यं प्रस्तुताक्षेपि चित्रोक्त्या यत् तदामुखम्॥ ७॥

प्रस्तावना वा तत्र स्युः कथोद्घातः प्रवृत्तकम्।
प्रयोगातिशयश्चाऽथ वीथ्यङ्गानि त्रयोदश॥ ८॥

तत्र कथोद्घातः।

स्वेतिवृत्तसमं वाक्यमर्थं वा यत्र सूत्रिणः।
गृहीत्वा प्रविशेत् पात्रं कथोद्घातो द्विधैव सः॥ ९॥

वाक्यं यथा रत्नावल्याम्। यौगन्धरायणः। द्वीपादन्यस्मादपीति। वाक्यार्थं यथा वेणीसंहारे। भीमः।

निर्वाणवैरिदहनाः प्रशमादरीणां
नन्दन्तु पाण्डुतनयाः सह केशवेन।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः॥

ततोऽर्थेनाऽऽह। भीमः।

लाक्षागृहानलविषान्नसभाप्रवेशैः
प्राणेषु वित्तनिचयेषु च नः प्रहृत्य।
आकृष्टपाण्डववधूपरिधानकेशाः
स्वस्था भवन्तु मयि जीवति धार्तराष्ट्राः॥

अथ प्रवृत्तकम्।

कालसाम्यसमाक्षिप्तप्रवेशः स्यात् प्रवृत्तकम्।

प्रवृत्तकालसमानगुणवर्णनया सूचितपात्रप्रवेशः प्रवृत्तकं यथा।

आसादितप्रकटनिर्मलचन्द्रहासः
प्राप्तः शरत्समय एष विशुद्धकान्तः।

उत्खाय गाढतमसं घनकालमुग्रं
रामो दशास्यमिव सम्भृतबन्धुजीवः ॥

ततः प्रविशति यथानिर्दिष्टो रामः।

अथ प्रयोगातिशयः।

एषोऽयमित्युपक्षेपात् सूत्रधारप्रयोगतः।
पात्रप्रवेशो यत्रैष प्रयोगातिशयो मतः ॥ १० ॥

यथा एष राजेव दुष्यन्त इति।

अथ वीथ्यङ्गानि।

उद्घात्यकावलगिते प्रपञ्चत्रिगते छलम्।
वाक्केल्यधिबले गण्डमवस्यन्दितनालिके।
असत्प्रलापव्याहारमृदवानि त्रयोदश ॥ ११ ॥

तत्र।

गूढार्थपदपर्यायमाला प्रश्नोत्तरस्य वा।
यत्राऽन्योन्यं समालापो द्वेधोद्घात्यं तदुच्यते ॥ १२ ॥

गूढार्थं पदं तत्पर्यायश्चेत्येवं माला। प्रश्नोत्तरं चेत्येवं वा माला। द्वयोरुक्तिप्रत्युक्तौ तद् द्विविधमुद्घात्यकम्। तत्राऽऽद्यं विक्रमोर्वश्यां यथा। विदूषकः। *भो वअस्स को एसो कामो जेण तुमं पि दूमिज्जसे सो किं पुरिसो आदु इत्थिअ त्ति। राजा। सखे।

---

* भो वयस्य क एष कामो येन त्वमपि दूयसे स किं पुरुषोऽथवा स्त्रीति।

मनोजातिरनाधीना सुखेष्वेव प्रवर्तते ।
स्नेहस्य ललितो मार्गः काम इत्यभिधीयते ॥

विदूषकः । *एवं पि ण जाणे । राजा । वयस्य इच्छाप्रभवः स इति । विदूषकः । †किं जो जं इच्छदि सो तं कामेदि-त्ति । राजा । अथ किम् । विदूषकः । ‡ता जाणिदं जह अहं सूअआरसालाए भोअणं इच्छामि ।

द्वितीयं यथा पाण्डवानन्दे ।

का श्लाघ्या गुणिनां क्षमा परिभवः को यः स्वकुल्यैः कृतः ।
किं दुःखं परसंश्रयो जगति कः श्लाघ्यो य आश्रीयते ।
को मृत्युर्व्यसनं शुचं जहति के यैर्निर्जिताः शत्रवः
कैर्विज्ञातमिदं विराटनगरे छन्नस्थितैः पाण्डवैः ॥

अथाऽवलगितम् ।

**यत्रैकत्र समावेशात् कार्यमन्यत् प्रसाध्यते ।**
**प्रस्तुतेऽन्यत्र वाऽन्यत् स्यात् तत् चाऽवलगितं द्विधा ॥ १३ ॥**

तत्राऽऽद्यं यथोत्तरचरिते । समुत्पन्नवनविहारगर्भदोहदायाः सीताया दोहदकार्यैं अनुप्रविश्य जनापवादादरण्ये त्यागः । द्वितीयं यथा छलितरामे । रामः । लक्ष्मण तात वियुक्तामयोध्यां विमानस्थो नाऽहं प्रवेष्टुं शक्नोमि । तदवतीर्य गच्छामि ।

---

* एवमपि न जानामि ।

† किं यो यदिच्छति स तत् कामयतीति ।

‡ तज्ज्ञातं यथाहं सूपकारशालायां भोजनमिच्छामि ।

कोऽपि सिंहासनस्याऽधः स्थितः पादुकयोः पुरः।
जटावानक्षमाली च चामरी च विराजते॥

इति भरतदर्शनकार्यसिद्धिः।

अथ प्रपञ्चः।

**असद्भूतमिथःस्तोत्रं प्रपञ्चो हास्यकृन् मतः।**

असद्भूतेनाऽर्थेन पारदार्यादिनैपुण्यादिना याऽन्योन्यस्तुतिः स प्रपञ्चः। यथा कर्पूरमञ्जर्याम्। भैरवानन्दः।
*रण्डा चण्डा दिक्खिदा धम्मदारा मज्जं मंसं पिज्जए खज्जए अ।
भिक्खा भोज्जं चम्मखण्डं च सेज्जा कोलो धम्मो कस्स णो होइ रम्मो॥

अथ त्रिगतम्।

**श्रुतिसाम्यादनेकार्थयोजनं त्रिगतं त्विह।**
**नटादित्रितयालापः पूर्वरङ्गे तदिष्यते॥ १४॥**

यथा विक्रमोर्वश्याम्।

मत्तानां कुसुमरसेन षट्पदानां
शब्दोऽयं परभृतनाद एष धीरः।
कैलासे सुरगणसेविते समन्तात्
किन्नर्यः कलमधुराक्षरं प्रगीताः॥

अथ छलनम्।

---

* रण्डा चण्डा दीक्षिता धर्मदारा मद्यं मांसं पीयते खाद्यते च।
भिक्षा भोज्यं चर्मखण्डञ्च शय्या कौलो धर्मः कस्य न भवति रम्यः॥

प्रियाभैरप्रियैर्वाक्यैर्विलोभ्य छलना छलम् ।

यथा वेणीसंहारे । भीमार्जुनौ ।

कर्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी
राजा दुःशासनादेर्गुरुरनुजशतस्याऽङ्गराजस्य मित्रम् ।
कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य दासाः
क्वाऽऽस्ते दुर्योधनोऽसौ कथयत पुरुषा द्रष्टुमभ्यागतौ स्वः ॥

अथ वाक्केली ।

विनिवृत्त्याऽस्य वाक्केली द्विस्त्रिः प्रत्युक्तितोऽपि वा ॥ १५ ॥

अस्येति वाक्यस्य प्रक्रान्तस्य साकाङ्क्षस्य विनिवर्तनं वाक्केली । द्विस्त्रिर्वा उक्तिप्रत्युक्तयः । तत्राऽऽद्या यथोत्तरचरिते । वासन्ती ।

त्वं जीवितं त्वमसि मे हृदयं द्वितीयं
त्वं कौमुदी नयनयोरमृतं त्वमङ्गे ।
इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां
तामेव शान्तमथवा किमतः परेण ॥

उक्तिप्रत्युक्तितो यथा रत्नावल्याम् । विदूषकः । *भोदि मअणिए मं पि एदं चच्चरिं सिक्खावेहि । मदनिका । हदास ण क्खु एसा चच्चरी दुवदिखण्डअं क्खु एदम् । विदूषकः । भोदि किं एदिणा खण्डेण मोदआ करीअन्ति । मदनिका । ण हि पढीअदि क्खु एदमित्यादि ।

---

* भवति मदनिके मामप्येतां चर्चरीं शिक्षय ।—हताश न खलु एषा चर्चरी द्विपदीखण्डकं खल्वेतत् ।—भवति किमेतेन खण्डेन मोदकाः क्रियन्ते ।—न हि, पठ्यते खल्वेतत् ।

अथाऽधिबलम्।

अन्योन्यवाक्याधिक्योक्तिः स्पर्धयाऽधिबलं भवेत्।

यथा वेणीसंहारे। अर्जुनः।

सकलरिपुजयाशा यत्र बद्धा सुतैस्ते
तृणमिव परिभूतो यस्य गर्वेण लोकः।
रणशिरसि निहन्ता तस्य राधासुतस्य
प्रणमति पितरौ वां मध्यमः पाण्डुपुत्रः॥

इत्युपक्रमे। राजा। अरे नाऽहं भवानिव विकत्थनाप्रगल्भः।
किन्तु।

द्रक्ष्यन्ति न चिरात् सुप्तं बान्धवास्त्वां रणाङ्गणे।
मद्गदाभिन्नवक्षोस्थिवेणिकाभङ्गभीषणम्॥

इत्यन्तेन भीमदुर्योधनयोरन्योन्यवाक्यस्याऽऽधिक्योक्तिरधिबलम्।

अथ गण्डः।

गण्डः प्रस्तुतसम्बन्धिभिन्नार्थं सहसोदितम्॥ १६॥

यथोत्तरचरिते। रामः।

इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयोर्
असावस्याः स्पर्शो वपुषि बहलश्चन्दनरसः।
अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः॥

प्रविश्य प्रतीहारी। *देव उअत्थिदो। रामः। अयि कः। प्रतीहारी। देवस्स आसण्णपरिचारओ दुम्मुहो इति।

अथाऽवस्यन्दितम्।

**रसोक्तस्याऽन्यथा व्याख्या यत्राऽवस्यन्दितं हि तत्।**

यथा छलितरामे। सीता। †जाद कल्लं क्खु तुम्हेहिं अजुज्झाए गन्तव्वं। तहिं सो राआ विणएण णमिदव्वो। लवः। अम्ब किमावाभ्यां राजोपजीविभ्यां भवितव्यम्। सीता। जाद सो क्खु तुम्हाणं पिदा। लवः। किमावयो रघुपतिः पिता। सीता। साशङ्कम्। जाद ण क्खु परं तुम्हाणं सअलाए ज्जेव पुहवीए इति।

अथ नालिका।

**सोपहासा निगूढार्था नालिकैव प्रहेलिका ॥ १७ ॥**

यथा मुद्राराक्षसे। चरः। ‡हंहो बह्मण मा कुप्प। किं पि तुह उअज्झाओ जाणादि किं पि अह्मारिसा जणा जाणन्ति। शिष्यः। किमस्मदुपाध्यायस्य सर्वज्ञत्वमपहर्तुमिच्छसि। चरः। यदि दे उवज्झाओ सव्वं जाणादि ता जाणादु दाव कस्स चन्दो अणभिप्पेदोत्ति। शिष्यः। किमनेन ज्ञातेन भवतीत्युपक्रमे।

---

* देव, उपस्थितः।—देवस्यासन्नपरिचारको दुर्मुखः।

† जात, कल्यं खलु युवाभ्यामयोध्यायां गन्तव्यं तर्हि स राजा विनयेन नमितव्यः।—जात स खलु युवयोः पिता।—जात न खलु परं युवयोः सकलाया एव पृथिव्याः।

‡ हंहो ब्राह्मण मा कुप्य किमपि तवोपाध्यायो जानाति किमप्यस्मादृशा जना जानन्ति।—यदि त उपाध्यायः सर्वं जानाति तज्जानातु तावत् कस्य चन्द्रोऽनभिप्रेत इति।

चाणक्यः। चन्द्रगुप्तादपरकान् पुरुषान् जानामीत्युक्तं भवति।

अथाऽसत्प्रलापः।

असम्बद्धकथाप्रायोऽसत्प्रलापो यथोत्तरः।

ननु चाऽसम्बद्धार्थत्वेऽसङ्गतिर्नाम वाक्यदोष उक्तः। तन्न। उत्स्वप्नायितमदोन्मादशैशवादीनामसम्बद्धप्रलापितैव विभावः। यथा।

अर्चिष्मन्ति विदार्य वक्त्रकुहराण्यासृक्कतो वासुकेर्
अङ्गुल्या विषकर्बुरान् गणयतः संस्पृश्य दन्ताङ्कुरान्।
एकं त्रीणि नवाऽष्ट सप्तषडिति प्रध्वस्तसङ्ख्याक्रमा
वाचः क्रौञ्चरिपोः शिशुत्वविकलाः श्रेयांसि पुष्णन्तु वः॥

यथा च।

हंस प्रयच्छ मे कान्तां गतिस्तस्यास्त्वया हृता।
विभावितैकदेशेन देयं यदभियुज्यते॥

यथा वा।

भुक्ता हि मया गिरयः स्नातोऽहं वह्निना पिबामि वियत्।
हरिहरहिरण्यगर्भा मत्पुत्रास्तेन नृत्यामि॥

अथ व्याहारः।

अन्यार्थमेव व्याहारो हास्यलोभकरं वचः।

यथा मालविकाग्निमित्रे लास्यप्रयोगावसाने। मालविका

निर्गन्तुमिच्छति। विदूषकः। *मा दाव उवएससुद्धा गमिस्ससीत्युपक्रमे गणदासः। विदूषकं प्रति। आर्य उच्यतां यस्त्वया क्रमभेदो लचितः। विदूषकः। †पढमं पच्चूसे बम्हणस्स पूआ भोदि सा तए लङ्घिदा। मालविका स्मयत इत्यादिना नायकस्य विश्रब्धनायिकादर्शनप्रयुक्तेन हास्यलोभकारिणा वचनेन व्याहारः।

अथ मृदवम्।

दोषा गुणा गुणा दोषा यत्र स्युर्मृदवं हि तत्॥ १८॥

यथा शाकुन्तले।

मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः
सत्त्वानामुपलच्यते विकृतिमच्चित्तं भयक्रोधयोः।
उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लच्ये चले
मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः॥

इति मृगयादोषस्य गुणीकारः।

यथा च।

सततमनिर्वृतमानसमायाससहस्रसङ्कुलक्लिष्टम्।
गतनिद्रमविश्वासं जीवति राजा जिगीषुरयम्॥

इति राज्यगुणस्य दोषीभावः।

उभयं वा।

---

* मा तावदुपदेशशुद्धा गमिष्यसि।

† प्रथमं प्रत्यूषे ब्राह्मणस्य पूजा भवति सा तया लङ्घिता।

सन्तः सच्चरितोदयव्यसनिनः प्रादुर्भवद्यन्त्रणाः
सर्वत्रैव जनापवादचकिता जीवन्ति दुःखं सदा।
अव्युत्पन्नमतिः कृतेन न सता नैवाऽसता व्याकुलो
युक्तायुक्तविवेकशून्यहृदयो धन्यो जनः प्राकृतः॥

इति प्रस्तावनाङ्गानि।

एषामन्यतमेनाऽर्थं पात्रं चाऽऽक्षिप्य सूत्रभृत्।
प्रस्तावनान्ते निर्गच्छेत् ततो वस्तु प्रपञ्चयेत्॥ १९॥

तत्र।

अभिगम्यगुणैर्युक्तो धीरोदात्तः प्रतापवान्।
कीर्तिकामो महोत्साहस्त्रय्यास्त्राता महीपतिः॥ २०॥
प्रख्यातवंशो राजर्षिर्दिव्यो वा यत्र नायकः।
तत्प्रख्यातं विधातव्यं वृत्तमत्राऽऽधिकारिकम्॥ २१॥

यत्रेतिवृत्ते सत्यवागसंवादकारिनीतिशास्त्रप्रसिद्धाभिगामिकादिगुणयुक्तो रामायणमहाभारतादिप्रसिद्धो धीरोदात्तो राजर्षिर्दिव्यो वा नायकः तत्प्रख्यातमेवाऽत्र नाटके आधिकारिकं वस्तु विधेयमिति।

यत् तत्राऽनुचितं किञ्चिन् नायकस्य रसस्य वा।
विरुद्धं तत् परित्याज्यमन्यथा वा प्रकल्पयेत्॥ २२॥

यथा छद्मना वालिवधो मायुराजेनोदात्तराघवे परित्यक्तः। वीरचरिते तु रावणसौहृदेन वाली रामवधार्थमागतो रामेण हत इत्यन्यथा कृतः।

आद्यन्तमेवं निश्चित्य पञ्चधा तद् विभज्य च।
खण्डशः सन्धिसञ्ज्ञांश्च विभागानपि खण्डयेत्॥ २३॥

अनौचित्यरसविरोधपरिहारपरिशुद्धीकृतसूचनीयदर्शनीय-वस्तुविभागफलानुसारेणोपक्षिप्तबीजबिन्दुपताकाप्रकरीकार्यलक्षणार्थप्रकृतिकं पञ्चावस्थानुगुण्येन पञ्चधा विभजेत्। पुनरपि चैकैकस्य भागस्य द्वादश त्रयोदश चतुर्दशेत्येवमङ्गसञ्ज्ञानां सन्धीनां विभागान् कुर्यात्।

चतुःषष्टिस्तु तानि स्युरङ्गानीत्यपरं तथा।
पताकावृत्तमप्यूनमेकाद्यैरनुसन्धिभिः।
अङ्गान्यत्र यथालाभमसन्धिं प्रकरीं न्यसेत्॥ २४॥

अपरमपि प्रासङ्गिकमितिवृत्तमेकाद्यैरनुसन्धिभिर्न्यूनमिति प्रधानेतिवृत्तादेकद्वित्रिचतुर्भिरनुसन्धिभिर्नूनं पताकेतिवृत्तं न्यसनीयम्। अङ्गानि च प्रधानाविरोधे यथालाभं न्यसनीयानि प्रकरीतिवृत्तं त्वपरिपूर्णसन्धि विधेयम्।

तत्रैवं विभक्ते।

आदौ विष्कम्भकं कुर्यादङ्कं वा कार्ययुक्तितः।

इयमत्र कार्ययुक्तिः।

अपेक्षितं परित्यज्य नीरसं वस्तुविस्तरम्।
यदा सन्दर्शयेत् शेषं कुर्याद् विष्कम्भकं तदा॥ २५॥
यदा तु सरसं वस्तु मूलादेव प्रवर्तते।
आदावेव तदाऽङ्कः स्यादामुखाक्षेपसंश्रयः॥ २६॥

स च।

प्रत्यक्षनेतृचरितो बिन्दुव्याप्तिपुरस्कृतः।
अङ्को नानाप्रकारार्थसंविधानरसाश्रयः॥ २७॥

रङ्गप्रवेशे साक्षान् निर्दिश्यमाननायकव्यापारो बिन्दूपक्षेपार्थपरिमितोऽनेकप्रयोजनसंविधानरसाधिकरण: उत्सङ्ग इवाऽङ्कः

तत्र च।

अनुभावविभावाभ्यां स्थायिना व्यभिचारिभिः।
गृहीतमुक्तैः कर्तव्यमङ्गिनः परिपोषणम्॥ २८॥

अङ्गिन एवाऽङ्गिरसस्थायिनः सङ्ग्रहात् स्थायिनेति रसान्तरस्थायिनो ग्रहणम्। गृहीतमुक्तैः परस्परव्यतिकीर्णैरित्यर्थः।

न चाऽतिरसतो वस्तु दूरं विच्छिन्नतां नयेत्।
रसं वा न तिरोदध्याद् वस्त्वलङ्कारलक्षणैः॥ २९॥

कथासन्ध्यङ्गोपमादिलक्षणैर्भूषणादिभिः।

एको रसोऽङ्गीकर्तव्यो वीरः शृङ्गार एव वा।
अङ्गमन्ये रसाः सर्वे कुर्यान् निर्वहणेऽद्भुतम्॥ ३०॥

ननु च रसान्तरस्थायिनेत्यनेनैव रसान्तराणामङ्गत्वमुक्तम्। तन् न। यत्र रसान्तरस्थायी स्वानुभावविभावव्यभिचारियुक्तो भूयसोपनिबध्यते तत्र रसान्तराणामङ्गत्वम्। केवलस्थाय्युपनिबन्धे तु स्थायिनो व्यभिचारितैव।

दूराध्वानं वधं युद्धं राज्यदेशादिविप्लवम् ।
संरोधं भोजनं स्नानं सुरतं चाऽनुलेपनम् ॥ ३१ ॥
अम्बरग्रहणादीनि प्रत्यक्षाणि न निर्दिशेत् ।

अङ्कैर्नैवोपनिबध्नीत प्रवेशकादिभिरेव सूचयेदित्यर्थः ।

नाऽधिकारिवधं क्वाऽपि त्याज्यमावश्यकं न च ॥ ३२ ॥

अधिकृतनायकवधं प्रवेशकादिनाऽपि न सूचयेत् । आवश्यकं तु देवपितृकार्याद्यवश्यमेव क्वचित् कुर्यात् ।

एकाहाचरितैकार्थमित्थमासन्ननायकम् ।
पात्रैस्त्रिचतुरैरङ्कं तेषामन्तेऽस्य निर्गमः ॥ ३३ ॥

एकदिवसप्रवृत्तैकप्रयोजनसम्बद्धमासन्ननायकमबहुपात्रप्रवेशमङ्कं कुर्यात् । तेषां पात्राणामवश्यमङ्कस्याऽन्ते निर्गमः कार्यः ।

पताकास्थानकान्यत्र बिन्दुरन्ते च बीजवत् ।
एवमङ्काः प्रकर्तव्याः प्रवेशादिपुरस्कृताः ।
पञ्चाङ्कमेतदवरं दशाङ्कं नाटकं परम् ॥ ३४ ॥

इत्युक्तं नाटकलक्षणम् ।

अथ प्रकरणे वृत्तमुत्पाद्यं लोकसंश्रयम् ।
अमात्यविप्रवणिजामेकं कुर्याच्च नायकम् ॥ ३५ ॥
धीरप्रशान्तं सापायं धर्मकामार्थतत्परम् ।
शेषं नाटकवत् सन्धिप्रवेशकरसादिकम् ॥ ३६ ॥

इति। कविबुद्धिविरचितमितिवृत्तम्। लोकसंश्रयमनुदात्त-ममात्याद्यन्यतमधीरप्रशान्तनायकं विपदन्तरितार्थसिद्धिं कु-र्यात्। प्रकरणे मन्त्री अमात्य एव। सार्थवाहो वणिग्विशेष एवेति। स्पष्टमन्यत्।

नायिका तु द्विधा नेतुः कुलस्त्री गणिका तथा।
क्वचिदेकैव कुलजा वेश्या क्वाऽपि द्वयं क्वचित्॥ ३७॥
कुलजाऽऽभ्यन्तरा बाह्या वेश्या नाऽतिक्रमोऽनयोः।
आभिः प्रकरणं त्रेधा सङ्कीर्णं धूर्तसङ्कुलम्॥ ३८॥

वेशो भृतिः सोऽस्या जीवनमिति वेश्या। तद्विशेषो गणि-का। यदुक्तम्।

आभिरभ्यर्थिता वेश्या रूपशीलगुणान्विता।
लभते गणिकाशब्दं स्थानं च जनसंसदि॥

एवं च कुलजा वेश्या उभयमिति त्रेधा प्रकरणे ना-यिका। यथा वेश्यैव तरङ्गदत्ते कुलजैव पुष्पदूषितके। ते द्वेऽपि मृच्छकटिकायामिति। कितवद्यूतकारादिधूर्तसङ्कुलं तु मृच्छ-कटिकादिवत् सङ्कीर्णप्रकरणमिति।

अथ नाटिका।

लक्ष्यते नाटिकाऽप्यत्र सङ्कीर्णान्यनिवृत्तये।

अत्र केचित्।

अनयोश्च बन्धयोगादेको भेदः प्रयोक्तृभिर्ज्ञेयः।
प्रख्यातस्त्वितरो वा नाटीसञ्ज्ञाश्रिते काव्ये॥

इत्यमुं भरतीयं श्लोकमेको भेदः प्रख्यातो नाटिकाख्य इतरस्त्वप्रख्यातः प्रकरणिकासञ्ज्ञः नाटीसञ्ज्ञया द्वे काव्ये आश्रिते इति व्याचक्षाणाः प्रकरणिकामपि मन्यन्ते। तदसत्। उद्देशलक्षणयोरनभिधानात् समानलक्षणत्वे वा भेदाभावात्। वस्तुरसनायकानां प्रकरणाभेदात् प्रकरणिकायाः। अतोऽनुद्दिष्टाया नाटिकाया यत् मुनिना लक्षणं कृतं तत्रायमभिप्रायः। शुद्धलक्षणसङ्करादेव तल्लक्षणे सिद्धे लक्षणकरणं सङ्कीर्णानां नाटिकैव कर्तव्येति नियमार्थं विज्ञायते।

तमेव सङ्करं दर्शयति।

तत्र वस्तु प्रकरणात् नाटकात् नायको नृपः।
प्रख्यातो धीरललितः शृङ्गारोऽङ्गी सलक्षणः॥ ३९॥

उत्पाद्येतिवृत्तत्वं प्रकरणधर्मः प्रख्यातनृपनायकादित्वं तु नाटकधर्म इति। एवं च नाटकप्रकरणनाटिकातिरेकेण वस्त्वादेः प्रकरणिकायामभावादङ्कपात्रभेदाद् यदि भेदः।

तत्र।

स्त्रीप्रायचतुरङ्कादिभेदकं यदि चेष्यते।
एकद्वित्र्यङ्कपात्रादिभेदेनाऽनन्तरूपता॥ ४०॥

तत्र नाटिकेति स्त्रीसमाख्ययौचित्यप्राप्तं स्त्रीप्रधानत्वम्। कैशिकीवृत्त्याऽऽश्रयत्वाच्च तदङ्गसङ्ख्ययाऽल्पावमर्शत्वेन चतुरङ्कत्वमप्यौचित्यप्राप्तमेव।

विशेषस्तु।

देवी तत्र भवेज् ज्येष्ठा प्रगल्भा नृपवंशजा।
गम्भीरा मानिनी कृच्छ्रात् तद्वशान् नेतृसङ्गमः॥ ४१॥

प्राप्या तु।

नायिका तादृशी मुग्धा दिव्या चाऽतिमनोहरा।

तादृशीति नृपवंशजत्वादिधर्मातिदेशः।

अन्तःपुरादिसम्बन्धादासन्ना श्रुतिदर्शनैः॥ ४२॥
अनुरागो नवावस्थो नेतुस्तस्यां यथोत्तरम्।
नेता तत्र प्रवर्तेत देवीत्रासेन शङ्कितः।

तस्यां मुग्धनायिकायामन्तःपुरसम्बन्धसङ्गीतकसम्बन्धादिना प्रत्यासन्नायां नायकस्य देवीप्रतिबन्धान्तरितः उत्तरोत्तरो नवावस्थानुरागो निबन्धनीयः।

कैशिक्यङ्गैश्चतुर्भिश्च युक्ताऽङ्कैरिव नाटिका॥ ४३॥

प्रत्यङ्कोपनिबद्धाभिहितलक्षणकैशिक्यङ्गचतुष्टयवती नाटिकेति।

अथ भाणः।

भाणस्तु धूर्तचरितं स्वानुभूतं परेण वा।
यत्रोपवर्णयेदेको निपुणः पण्डितो विटः॥ ४४॥
सम्बोधनोक्तिप्रत्युक्ती कुर्यादाकाशभाषितैः।
सूचयेद् वीरशृङ्गारौ शौर्यसौभाग्यसंस्तवैः॥ ४५॥
भूयसा भारती वृत्तिरेकाङ्कं वस्तु कल्पितम्।
मुखनिर्वहणे साङ्गे लास्याङ्गानि दशाऽपि च॥ ४६॥

इति। धूर्ताश्चौरद्यूतकारादयः तेषां चरितं यत्रैक एव विटः स्वकृतं परकृतं वोपवर्णयति स भारतीवृत्तिप्रधानत्वाद् भाणः। एकस्य चोक्तिप्रत्युक्तयः आकाशभाषितैराशङ्कितोत्तरत्वेन भवन्ति। अस्पष्टत्वाच्च वीरशृङ्गारौ सौभाग्यशौर्योपवर्णनया सूचनीयौ।

लास्याङ्गानि।

गेयं पदं स्थितं पाठ्यमासीनं पुष्पगण्डिका
प्रच्छेदकस्त्रिगूढं च सैन्धवाख्यं द्विगूढकम्॥ ४७॥
उत्तमोत्तमकं चैव उक्तप्रत्युक्तमेव च।
लास्ये दशविधं ह्येतदङ्गनिर्देशकल्पनम्॥ ४८॥

शेषं स्पष्टमिति।

अथ प्रहसनम्।

तद्वत् प्रहसनं त्रेधा शुद्धवैकृतसङ्करैः।

तद्वदिति भाणवद् वस्तुसन्धिसन्ध्यङ्गलास्यादीनामतिदेशः।

तत्र शुद्धं तावत्।

पाखण्डिविप्रप्रभृतिचेटचेटीविटाकुलम्।
चेष्टितं वेषभाषाभिः शुद्धं हास्यवचोन्वितम्॥ ४९॥

पाखण्डिनः शाक्यनिर्ग्रन्थप्रभृतयः। विप्राश्चाऽत्यन्तमृजवः। जातिमात्रोपजीविनो वा। प्रहसनाङ्गिहास्यविभावास्तेषां च यथावत् स्वव्यापारोपनिबन्धनं चेटचेटी व्यवहारयुक्तं शुद्धं प्रहसनम्।

विकृतं तु।

कामुकादिवचोवेषैः षण्ढकञ्चुकितापसैः।
विकृतं सङ्कराद् वीथ्या सङ्कीर्णं धूर्तसङ्कुलम्।

कामुकादयो भुजङ्गचारभटाद्याः। तद्वेषभाषादियोगिनो यत्र षण्ढकञ्चुकितापसवृद्धादयस्तद्विकृतं। स्वस्वरूपप्रच्युतविभावत्वात्। वीथ्यङ्गैस्तु सङ्कीर्णत्वात् सङ्कीर्णम्।

रसस्तु भूयसा कार्यः षड्विधो हास्य एव तु ॥ ५० ॥

इति स्पष्टम्।

अथ डिमः।

डिमे वस्तु प्रसिद्धं स्याद् वृत्तयः कैशिकीं विना।
नेतारो देवगन्धर्वयक्षरक्षोमहोरगाः।
भूतप्रेतपिशाचाद्याः षोडशात्यन्तमुद्धताः ॥ ५१ ॥
रसैरहास्यशृङ्गारैः षड्भिर्दीप्तैः समन्वितः।
मायेन्द्रजालसङ्ग्रामक्रोधोद्भ्रान्तादिचेष्टितैः ॥ ५२ ॥
चन्द्रसूर्योपरागैश्च न्याय्ये रौद्ररसेऽङ्गिनि।
चतुरङ्कश्चतुःसन्धिर्निर्विमर्शो डिमः स्मृतः ॥ ५३ ॥

डिमसङ्घात इति नायकसङ्घातव्यापारात्मकत्वाड् डिमः। तत्रेतिहासप्रसिद्धमितिवृत्तम्। वृत्तयश्च कैशिकीवर्जास्तिस्रः। रसाश्च वीररौद्रबीभत्साद्भुतकरुणभयानकाः षट्। स्थायी तु रौद्रो न्याय्यप्रधानो विमर्शरहिता मुखप्रतिमुखगर्भनिर्वहणाख्याश्चत्वारः सन्धयः साङ्गाः। मायेन्द्रजालाद्यनुभावसमाश्रयाः। शेषं प्रस्तावादिनाटकवत्। एतच्च च।

इदं त्रिपुरदाहेतु लक्षणं ब्रह्मणोदितम्।
ततस्त्रिपुरदाहश्च डिमसञ्ज्ञः प्रयोजितः॥

इति भरतमुनिना स्वयमेव त्रिपुरदाहेतिवृत्तस्य तुल्यत्वं दर्शितम्।

अथ व्यायोगः।

ख्यातेतिवृत्तो व्यायोगः ख्यातोद्धतनराश्रयः।
हीनो गर्भविमर्शाभ्यां दीप्ताः स्युर्डिमवद् रसाः॥ ५४॥
अस्त्रीनिमित्तसङ्ग्रामो जामदग्न्यजये यथा।
एकाहाचरितैकाङ्को व्यायोगो बहुभिर्नरैः॥ ५५॥

व्यायुज्यन्तेऽस्मिन् बहवः पुरुषा इति व्यायोगः। तत्र डिमवद् रसाः षट् हास्यशृङ्गाररहिताः। वृत्त्यात्मकत्वाच्च रसानामवचनेऽपि कैशिकीरहितेतरवृत्तित्वं रसवदेव लभ्यते। अस्त्रीनिमित्तश्चाऽत्र सङ्ग्रामः। यथा परशुरामेण पितृवध-कोपात् सहस्रार्जुनवधः कृतः। शेषं स्पष्टम्।

अथ समवकारः।

कार्यं समवकारेऽपि आमुखं नाटकादिवत्।
ख्यातं देवासुरं वस्तु निर्विमर्शास्तु सन्धयः॥ ५६॥
वृत्तयो मन्दकैशिक्यो नेतारो देवदानवाः।
द्वादशोदात्तविख्याताः फलं तेषां पृथक् पृथक्॥ ५७॥
बहुवीररसाः सर्वे यद्वदम्भोधिमन्थने।
अङ्कैस्त्रिभिस्त्रिकपटस्त्रिशृङ्गारस्त्रिविद्रवः॥ ५८॥

द्विसन्धिरङ्कः प्रथमः कार्यो द्वादशनालिकः।
चतुर्द्विनालिकावन्त्यौ नालिका घटिकाद्वयम्॥ ५९॥
वस्तुस्वभावदैवाऽरिकृताः स्युः कपटास्त्रयः।
नगरोपरोधयुद्धे वाताग्न्यादिकविद्रवाः॥ ६०॥
धर्मार्थकामैः शृङ्गारो नाऽत्र बिन्दुप्रवेशकौ।
वीथ्यङ्गानि यथालाभं कुर्यात् प्रहसने यथा॥ ६१॥

समवकीर्यन्तेऽस्मिन्नर्था इति समवकारः। तत्र नाटकादिवदामुखमिति समस्तरूपकाणामामुखप्रापणम्। विमर्शवर्जिताश्चत्वारः सन्धयः। देवासुरादयो द्वादशनायकाः। तेषां च फलानि पृथक् पृथग् भवन्ति। यथा समुद्रमन्थने वासुदेवादीनां लक्ष्म्यादिलाभाः। वीरश्चाऽङ्गी अङ्गभूताः सर्वे रसाः। त्रयोऽङ्काः। तेषां प्रथमो द्वादशनालिकानिर्वृत्तेति वृत्तप्रमाणः। यथासङ्ख्यं चतुर्द्विनालिकावन्त्यौ नालिका च घटिकाद्वयम्। प्रत्यङ्कं च यथासङ्ख्यं कपटाः। तथा नगरोपरोधयुद्धवाताग्न्यादिविद्रवाणां मध्ये एकैको विद्रवः कार्यः। धर्मार्थकामशृङ्गाराणामेकैकः शृङ्गारः। प्रत्यङ्कमेव विधातव्यः। वीथ्यङ्गानि च यथालाभं कार्याणि। बिन्दुप्रवेशकौ नाटकोक्तावपि न विधातव्यौ। इत्ययं समवकारः।

अथ वीथी।

वीथी तु कैशिकीवृत्तौ सन्ध्यङ्गाङ्कैस्तु भाणवत्।
रसः सूच्यस्तु शृङ्गारः स्पृशेदपि रसान्तरम्॥ ६२॥

युक्ता प्रस्तावनाख्यातैरङ्गैरुद्घात्यकादिभिः।
एवं वीथी विधातव्या ह्येकपात्रप्रयोजिता ॥ ६३ ॥

वीथीवद् वीथीमार्गः अङ्गानां पङ्क्तिर्वा भाणवत् कार्या। विशेषस्तु रसः शृङ्गारः अपरिपूर्णत्वात् भूयसा सूच्यः। रसान्तराण्यपि स्तोकं स्प्रष्टव्यानि। कैशिकी वृत्तिः रसौचित्यादेवेति। शेषं स्पष्टम्।

अथाऽङ्कः।

उत्सृष्टिकाङ्के प्रख्यातं वृत्तं बुद्ध्या प्रपञ्चयेत्।
रसस्तु करुणः स्थायी नेतारः प्राकृता नराः ॥ ६४ ॥
भाणवत् सन्धिवृत्त्यङ्गैर्युक्तः स्त्रीपरिदेवितैः।
वाचा युद्धं विधातव्यं तथा जयपराजयौ ॥ ६५ ॥

उत्सृष्टिकाङ्क इति नाटकान्तर्गताङ्कव्यवच्छेदार्थम्। शेषं प्रतीतमिति।

अथेहामृगः।

मिश्रमीहामृगे वृत्तं चतुरङ्कं त्रिसन्धिमत्।
नरदिव्यावनियमान् नायकप्रतिनायकौ ॥ ६६ ॥
ख्यातौ धीरोद्धतावन्त्यो विपर्यासादयुक्तकृत्।
दिव्यस्त्रियमनिच्छन्तीमपहारादिनेच्छतः ॥ ६७ ॥
शृङ्गाराभासमप्यस्य किञ्चित् किञ्चित् प्रदर्शयेत्।
संरम्भं परमानीय युद्धं व्याजान् निवारयेत्।
वधप्राप्तस्य कुर्वीत वधं नैव महात्मनः ॥ ६८ ॥

मृगवदलभ्यां नायिकां नायकोऽस्मिन्नीहते इतीहामृगः। ख्याताख्यातं वस्तु अन्त्यः प्रतिनायको विपर्यासाद् विपर्ययज्ञानादयुक्तकारी विधेयः। स्पष्टमन्यत्।

इत्थं विचिन्त्य दशरूपकलक्ष्ममार्गम्
आलोक्य वस्तु परिभाव्य कविप्रबन्धान्।
कुर्यादयत्नवदलङ्कृतिभिः प्रबन्धं
वाक्यैरुदारमधुरैः स्फुटमन्दवृत्तैः॥ ६९ ॥

स्पष्टम्।

इति श्रीविष्णुसूनोर्धनिकस्य कृतौ दशरूपावलोके रूपकलक्षणप्रकाशो नाम तृतीयप्रकाशः समाप्तः।

अथेदानीं रसभेदः प्रदर्श्यते।

विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः।
आनीयमानः स्वाद्यत्वं स्थायी भावो रसः स्मृतः॥ १॥

वक्ष्यमाणस्वभावैर्विभावानुभावव्यभिचारिसात्त्विकैः काव्योपात्तैरभिनयोपदर्शितैर्वा श्रोतृप्रेक्षकाणामन्तर्विपरिवर्तमानो रत्यादिर्वक्ष्यमाणलक्षणः स्थायी स्वादगोचरतां निर्भरानन्दसंविदात्मतामानीयमानो रसः। तेन रसिकाः सामाजिकाः। काव्यं तु तथाविधानन्दसंविदुन्मीलनहेतुभावेन रसवदायुर्घृतमित्यादिव्यपदेशवत्।

तत्र विभावः।

ज्ञायमानतया तत्र विभावो भावपोषकृत्।
आलम्बनोद्दीपनत्वप्रभेदेन स च द्विधा॥ २॥

एवमयमेवमियमित्यतिशयोक्तिरूपकाव्यव्यापाराहितविशिष्टरूपतया ज्ञायमानो विभाव्यमानः सन्नालम्बनत्वेनोद्दीपनत्वेन वा यो नायकादिरभिमतदेशकालादिर्वा स विभावः। यदुक्तं विभाव इति विज्ञातार्थ इति। तांश्च यथास्वं यथावसरं च रसेषूपपादयिष्यामः। अमीषां चाऽनपेक्षितबाह्यसत्त्वानां शब्दोपधानादेवाऽऽसादिततद्भावानां सामान्यात्मनां स्वस्वसम्बन्धित्वेन विभावितानां साक्षाद्भावकचेतसि विपरिवर्तमानानामालम्बनादिभाव इति न वस्तुशून्यता। तदुक्तं भर्तृहरिणा।

शब्दोपहितरूपांस्तान् बुद्धेर्विषयतां गतान्।
प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते॥

इति। षट्सहस्रीकृताऽप्युक्तम्। एभ्यश्च सामान्यगुणयोगेन रसा निष्पद्यन्त इति।

तत्राऽऽलम्बनविभावो यथा।

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रोऽनुकान्तिप्रदः
शृङ्गारैकनिधिः स्वयं नु मदनो मासो नु पुष्पाकरः।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः॥

उद्दीपनविभावो यथा।

अयमुदयति चन्द्रश्चन्द्रिकाधौतविश्वः
परिणतविमलिम्नि व्योम्नि कर्पूरगौरः।
ऋजुरजतशलाकास्पर्धिभिर्यस्य पादैर्
जगदमलमृणाली पञ्जरस्थं विभाति॥

अनुभावो विकारस्तु भावसंसूचनात्मकः।

स्थायिभावाननुभावयतः सामाजिकान् सभ्रूविक्षेपकटाक्षादयो रसपोषकारिणोऽनुभावाः। एते चाऽभिनयकाव्ययोरप्यनुभावयतां साक्षाद् भावकानुभवकर्मतयाऽनुभूयन्त इत्यनुभवनमिति चाऽनुभावाः रसिकेषु व्यपदिश्यन्ते। विकारो भावसंसूचनात्मक इति तु लौकिकरसापेक्षया इह तु तेषां कारणत्वमेव। यथा ममैव।

उज्जृम्भाननमुल्लसत्कुचतटं लोलभ्रमद्भ्रूलतं
स्वेदाम्भःस्नपिताङ्गयष्टिविगलद्व्रीडं सरोमाञ्चया।
धन्यः कोऽपि युवा स यस्य वदने व्यापारिताः सस्पृहं
मुग्धे दुग्धमहाब्धिफेनपटलप्रख्याः कटाक्षच्छटाः॥

इत्यादि यथारसमुदाहरिष्यामः।

**हेतुकार्यात्मनोः सिद्धिस्तयोः संव्यवहारतः॥ ३॥**

तयोर्विभावानुभावयोर्लौकिकरसं प्रतिहेतुकार्यभूतयोः संव्यवहारादेव सिद्धत्वान् न पृथग् लक्षणमुपयुज्यते। तदुक्तम्। विभावानुभावौ लोकसंसिद्धौ लोकयात्रानुगामिनौ लोकस्वभावोपगतत्वाच् च न पृथग् लक्षणमुच्यत इति।

अथ भावः।

**सुखदुःखादिकैर्भावैर्भावस्तद्भावभावनम्।**

अनुकार्याश्रयत्वेनोपनिबध्यमानैः सुखदुःखादिरूपैर्भावैस्तद्भावस्य भावकचेतसो भावनं वासनं भावः। तदुक्तम्। अहो ह्यनेन रसेन गन्धेन वा सर्वमेतद् भावितं वासितमिति। यत् तु रसान् भावयन् भाव इति। कवेरन्तर्गतं भावं भावयन् भाव इति च तदभिनयकाव्ययोः प्रवर्तमानस्य भावशब्दस्य प्रवृत्तिनिमित्तकथनम्।

ते च स्थायिनो व्यभिचारिणश्चेति वक्ष्यमाणाः।

**पृथग् भावा भवन्त्यन्येऽनुभावत्वेऽपि सात्त्विकाः।**
**सत्त्वादेव समुत्पत्तेस्तच् च तद्भावभावनम्॥ ४॥**

परगतदुःखहर्षादिभावनायामत्यन्तानुकूलान्तःकरणत्वं स-

त्त्वम् । यदाह । सत्त्वं नाम मनः प्रभवं तच्च समाहितमनस्त्वादुत्पद्यते । एतदेवाऽस्य सत्त्वं यतः खिन्नेन प्रहर्षितेन चाऽश्रुरोमाञ्चादयो निर्वर्त्यन्ते तेन सत्त्वेन निर्वृत्ताः सात्त्विकास्त एव भावास्तत उत्पद्यमानत्वादश्रुप्रभृतयोऽपि भावा भावसंसूचनात्मकविकाररूपत्वाच्च चाऽनुभावा इति द्वैरूप्यमेषाम् ।

ते च ।

**स्तम्भप्रलयरोमाञ्चाः स्वेदो वैवर्ण्यवेपथू ।**
**अश्रुवैस्वर्यमित्यष्टौ स्तम्भोऽस्मिन् निष्क्रियाङ्गता ।**
**प्रलयो नष्टसञ्ज्ञत्वं शेषाः सुव्यक्तलक्षणाः ॥ ५ ॥**

यथा ।

*वेवइ सेअदवदनी रोमञ्चिअ गत्तिए ववइ ।
विललुल्लु तु वलअ लहु वाहोअल्लीए रणेत्ति ॥
मुहऊ सामलि होइ खणे विमुच्छइ विअग्धेण ।
मुद्धा मुहल्ली तुअ पेम्मेण सावि ण धिज्जइ ॥

अथ व्यभिचारिणः । तत्र सामान्यलक्षणम् ।

**विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः ।**
**स्थायिन्युन्मग्ननिर्मग्नाः कल्लोला इव वारिधौ ॥ ६ ॥**

---

* अपभ्रंशिकभाषया चेयमुक्तिः सम्भाव्यते ।
वेपते खेदवदना रोमाञ्चं गात्रे वपति ।
विलोलस्ततो वलयो लघु बाहुवल्ल्यां रणति ॥
मुखं श्यामलं भवति क्षणं विमूर्च्छति विदग्धेन ।
मुग्धा मुखवल्ली तव प्रेम्णा सापि न धैर्यं करोति ॥
श्लोकद्वयस्यास्थानविन्यस्तत्वात् सन्दिग्धत्वाच्चास्य व्याख्या न समीचीना जाता ।

रुद्राक्षैः सकलैः सरत्नवलयं चित्रांशुकं वल्कलं
सीतालोचनहारि कल्पितमहो रम्यं वपुः कामिनः ॥

परस्थो यथा।

भिक्षो मांसनिषेवणं प्रकुरुषे किं तेन मद्यं विना
किं ते मद्यमपि प्रियं प्रियमहो वाराङ्गनाभिः सह।
वेश्या द्रव्यरुचिः कुतस्तव धनं द्यूतेन चौर्येण वा
चौर्यद्यूतपरिग्रहोऽपि भवतो दासस्य काऽन्या गतिः ॥

स्मितमिह विकासिनयनं किञ्चिल्लक्ष्यद्विजं तु हसितं स्यात्।
मधुरस्वरं विहसितं सशिरःकम्पमिदमुपहसितम् ॥ ७० ॥
अपहसितं सास्राक्षं विक्षिप्ताङ्गं भवत्यतिहसितम्।
द्वे द्वे हसिते चैषां ज्येष्ठे मध्येऽधमे क्रमशः ॥ ७१ ॥

उत्तमस्य स्वपरस्थविकारदर्शनात् स्मितहसिते मध्यमस्य विहसितोपहसितेऽधमस्याऽपहसितातिहसिते। उदाहृतयः स्वयमुत्प्रेक्ष्याः। व्यभिचारिणश्चाऽस्य।

निद्रालस्यश्रमग्लानिमूर्छाश्च सहचारिणः।
अतिलोकैः पदार्थैः स्याद् विस्मयात्मा रसोऽद्भुतः ॥ ७२ ॥
कर्माऽस्य साधुवादाश्रुवेपथुस्वेदगद्गदाः।
हर्षावेगधृतिप्राया भवन्ति व्यभिचारिणः ॥ ७३ ॥

लोकसीमातिवृत्तपदार्थवर्णनादिविभावितः साधुवादाद्य-

नुभावपरिपुष्टो विस्मयः स्थायिभावो हर्षावेगादिभावितो रसोऽद्भुतः। यथा।

दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्धतष्

टङ्कारध्वनिरार्यबालचरितप्रस्तावनाडिण्डिमः।

द्राक् पर्याप्तकपालसम्पुटमिलद्ब्रह्माण्डभाण्डोदर-

भ्राम्यत्पिण्डितचण्डिमा कथमसौ नाऽद्याऽपि विश्राम्यति॥

इत्यादि।

अथ भयानकः।

**विकृतस्वरसत्त्वादेर्भयभावो भयानकः।**
**सर्वाङ्गवेपथुस्वेदशोषवैचित्त्यलक्षणः।**
**दैन्यसम्भ्रमसम्मोहत्रासादिस्तत्सहोदरः॥ ७४॥**

रौद्रशब्दश्रवणाद् रौद्रसत्त्वदर्शनाच् च भयस्थायिभाव-प्रभवो भयानको रसः। तत्र सर्वाङ्गवेपथुप्रभृतयोऽनुभावाः। दैन्यादयस्तु व्यभिचारिणः। भयानको यथा प्रागुदाहृतः।

शस्त्रमेतत् समुत्सृज्य कुब्जीभूय शनैः शनैः।

यथायथागतेनैव यदि शक्नोषि गम्यताम्॥

यथा च रत्नावल्याम्। नष्टं वर्षवरैरित्यादि। यथा च।

स्वगेहात् पन्थानं तत उपचितं काननमथो

गिरिं तस्मात् सान्द्रद्रुमगहनमस्मादपि गुहाम्।

तदन्वङ्गान्यङ्गैरभिनिविशमानो न गणय-

त्यरातिः कालीये तव विजययात्रा चकितधीः॥

अथ करुणः।

इष्टनाशादनिष्टाप्तौ शोकात्मा करुणोऽनु तम्।
निःश्वासोच्छ्वासरुदितस्तम्भप्रलपितादयः॥ ७५॥
स्वापापस्मारदैन्याधिमरणालस्यसम्भ्रमाः।
विषादजडतोन्मादचिन्ताद्या व्यभिचारिणः॥ ७६॥

इष्टस्य बन्धुप्रभृतेर्विनाशादनिष्टस्य तु बन्धनादेः प्राप्त्या शोकप्रकर्षजः करुणः। तमन्विति तदनुभावनिश्वासादिकथनम्। व्यभिचारिणश्च स्वापापस्मारादयः। इष्टनाशात् करुणो यथा कुमारसम्भवे।

अयि जीवितनाथ जीवसी-
त्यभिधायोत्थितया तया पुरः।
ददृशे पुरुषाकृतिः क्षितौ
हरकोपानलभस्म केवलम्॥

इत्यादि रतिप्रलापे। अनिष्टावाप्तेः सागरिकाया बन्धनाद् यथा रत्नावल्याम्।

प्रीतिभक्त्यादयो भावा मृगयाक्षादयो रसाः।
हर्षोत्साहादिषु स्पष्टमन्तर्भावान् न कीर्तिताः॥ ७७॥

स्पष्टम्।

षट्त्रिंशद्भूषणादीनि सामादीन्येकविंशतिः।
लक्ष्यसन्ध्यन्तराङ्गानि सालङ्कारेषु तेषु च॥ ७८॥

विभूषणं चाऽक्षरसंहतिश्च
शोभाभिमानौ गुणकीर्तनं च।

इत्येवमादीनि षट्त्रिंशत्काव्यलक्षणानि। साम भेदः प्रदानं चेत्येवमादीनि सन्ध्यन्तराण्येकविंशतिरुपमादिष्विवाऽलङ्कारेषु हर्षोत्साहादिष्वन्तर्भावान् न पृथगुक्तानि।

रम्यं जुगुप्सितमुदारमथाऽपि नीचम्
उग्रं प्रसादि गहनं विकृतं च वस्तु।
यद्वाऽप्यवस्तु कविभावकभाव्यमानं
तन् नाऽस्ति यन् न रसभावमुपैति लोके ॥ ७९ ॥

विष्णोः सुतेनाऽपि धनञ्जयेन
विद्वन्मनोरागनिबन्धहेतुः।
आविष्कृतं मुञ्जमहीशगोष्ठी-
वैदग्ध्यभाजा दशरूपमेतत् ॥ ८० ॥

इति श्रीविष्णुसूनोर्धनिकस्य कृतौ दशरूपावलोके रसविचारो नाम चतुर्थः प्रकाशः समाप्तः ॥

# अथ भारतीयनाट्यशास्त्रे ।

## अष्टादशोऽध्यायः ।

कथयिष्याम्यहं विप्रा दशरूपविकल्पनम् ।
नामतः कर्मतश्चैव तथा चैव प्रयोगतः ॥ १ ॥
नाटकं सप्रकरणमङ्को व्यायोग एव च ।
भाणः समवकारश्च वीथी प्रहसनं डिमः ॥ २ ॥
ईहामृगश्च विज्ञेयो दशमे नाट्यलक्षणे ।
एतेषां लक्षणमहं व्याख्यास्याम्यनुपूर्वशः ॥ ३ ॥
सर्वेषामेव काव्यानां मातृका वृत्तयः स्मृताः ।
आभ्यो विनिःसृतं ह्येतद् दशरूपं प्रयोगतः ॥ ४ ॥
जातिभिः श्रुतिभिश्चैव स्वरा ग्रामत्वमागताः ।
यथा तथा वृत्तिभेदैः काव्यभेदा भवन्ति हि ॥ ५ ॥
ग्रामौ पूर्णस्वरौ द्वौ तु यथा वै षड्जमध्यमौ ।
सर्ववृत्तिविनिष्पन्नौ काव्यबन्धौ तथा त्विमौ ॥ ६ ॥
ज्ञेयं प्रकरणं चैव तथा नाटकमेव च ।
सर्ववृत्तिविनिष्पन्नं नानावस्थान्तराश्रयम् ॥ ७ ॥
भाणः समवकारश्च तथेहामृग एव च ।
उत्सृष्टिकाङ्को व्यायोगो वीथी प्रहसनं डिमः ॥ ८ ॥
कैशिकीवृत्तिहीनानि रूपाण्येतानि कारयेत् ।
अत ऊर्ध्वं प्रवक्ष्यामि काव्यबन्धविकल्पनम् ॥ ९ ॥

प्रख्यातवस्तुविषयं प्रख्यातोदात्तनायकम् ।
राजर्षिवंश्यचरितं तथा दिव्याश्रयोपेतम् ॥ १० ॥
नानाविभूतियुक्तं वृद्धिविलासादिभिश्चैव ।
अङ्कप्रवेशकाढ्यं भवति हि तत् तोटकं नाम ॥ ११ ॥
नृपतीनां यच् चरितं नानारसभावसंश्रितं बहुधा ।
सुखदुःखोत्पत्तिकृतं भवति हि तन् नाटकं नाम ॥ १२ ॥
अस्याऽवस्थोपेतं कार्यं प्रसमीक्ष्य बिन्दुप्रस्तारात् ।
कर्तव्योऽङ्कस्तज्ज्ञैः स तु सम्यङ् नाटके विधिवत् ॥ १३ ॥
अङ्क इति रूढिशब्दो भावैश्च रसैश्च रोहयत्यर्थान् ।
नानाविधानयुक्तो यस्मात् तस्माद् भवेदङ्कः ॥ १४ ॥
यत्राऽर्थस्य समाप्तिर्यत्र च बीजस्य भवति संहारः ।
किञ्चिदवलग्नबिन्दुः सोऽङ्क इति सदाऽवगन्तव्यः ॥ १५ ॥
ये नायका निगदितास् तेषां प्रत्यक्षचरितसंयोगः ।
नानावस्थान्तरितः कार्यस्त्वङ्को यथार्थरसः ॥ १६ ॥
नायकदेवीपरिजनपुरोहितामात्यसार्थवाहानाम् ।
नैकरसान्तरविहितो ह्यऽङ्क इति स विदितव्यस्तु ॥ १७ ॥
क्रोधप्रसादशोकाः शापोत्सर्गोऽथ विद्रवोद्वाहौ ।
अद्भुतसंश्रयदर्शनमङ्के प्रत्यक्षजानि स्युः ॥ १८ ॥
युद्धं राज्यस्य भ्रंशो मरणं समरस्य रोधनं चैव ।
प्रत्यक्षाणि तु नवाङ्के प्रवेशकैः संविधेयानि ॥ १९ ॥
अङ्के प्रवेशके वा प्रकरणमाश्रित्य नाटकं वाऽपि ।
भवतः कर्तव्यः स्याद् यस्तत्र स नायकः ख्यातः ॥ २० ॥

अवसरणमेव कार्यं सद्भिर्वा ग्रहणमेव वा नित्यम्।
बहुभिः कार्यविशेषैः प्रवेशकैः सूचयेद् वाऽपि ॥ २१ ॥
एकदिवसप्रवृत्तः कार्यस्त्वङ्कोऽथ बीजमाश्रित्य।
आवश्यककार्याणामविरोधेन प्रयोगेषु ॥ २२ ॥
एकाङ्केन कदाचिद् बहूनि कार्याणि योजयेद् धीमान्।
आवश्यकावरोधेन तत्र कार्याणि कार्याणि ॥ २३ ॥
रङ्गे तु ये प्रविष्टाः सर्वेषां भवति तत्र निष्क्रामः।
बीजार्थयुक्तिमुक्तं कृत्वा कार्यं यथार्थरसम् ॥ २४ ॥
ज्ञात्वा दिवसावस्थां क्षणयाममुहूर्तलक्षणोपेतम्।
विभजेत् सर्वमशेषं पृथक् पृथक् कार्यमङ्केषु ॥ २५ ॥
दिवसावसानकार्यं यद्यङ्के नोपपद्यते सर्वम्।
अङ्कच्छेदं कृत्वा प्रवेशकैस्तद् विधेयं हि ॥ २६ ॥
सविरहितनायकैकं कर्तव्यो नाटके प्रकरणे वा।
परिजनकथानुबन्धः प्रवेशको नाम विज्ञेयः ॥ २७ ॥
अङ्कच्छेदं कृत्वा मासकृतं वर्षसञ्चितं वाऽपि।
तत् सर्वं कर्तव्यं वर्षादूर्द्ध्वं च न तु क्वचित् ॥ २८ ॥
यः कश्चित् कार्यवशाद् गच्छति पुरुषः प्रकृष्टमध्वानम्।
तत्राऽप्यङ्कच्छेदः कर्तव्यः पूर्ववत् तज्ज्ञैः ॥ २९ ॥
अङ्कान्तरानुसारी सङ्क्षेपार्थमधिकृत्य विहितोऽयम्।
प्रकरणनाटकविषयोपदेशको नाम विज्ञेयः ॥ ३० ॥
नोत्तममध्यमपुरुषैराचरितो नाप्युदात्तवचनकृतः।
प्राकृतभाषाचारः प्रवेशको नाम विज्ञेयः ॥ ३१ ॥

कालोत्थानगतिरसवत्यासारसकामविषयाणाम् ।
आर्याभिधानस्ततः प्रवेशकः स्यादनेकार्थः ॥ ३२ ॥
बङ्काश्रयमप्यर्थं सङ्क्षिप्तेऽर्थे तु सन्धिषु च ।
बङ्कचूर्णपादवृत्तं जनयति खेदं प्रयोगस्य ॥ ३३ ॥
यत्राऽर्थस्य समाप्तिर्न भवत्यङ्के प्रयोगबाहुल्यात् ।
विष्कम्भः स्वल्पकथः प्रवेशकैः सोऽभिधातव्यः ॥ ३४ ॥
शुद्धः सङ्कीर्णो वा द्विविधो विष्कम्भकोऽपि विज्ञेयः ।
मध्यमपात्रः शुद्धः सङ्कीर्णो नीचमध्यकृतः ॥ ३५ ॥
न महाजनपरिवारं कर्तव्यं नाटकं प्रकरणं वा ।
यत् तत्र कार्यपुरुषास्त्वत्वारः पञ्चधा ते स्युः ॥ ३६ ॥
व्यायोगेहामृगसमवकारडिमसञ्ज्ञितानि कार्याणि ।
दशभिर्द्वादशभिर्वा षोडशभिर्वाऽपि पुरुषैः स्युः ॥ ३७ ॥
गोपुच्छाग्रं काव्यं कर्तव्यं बन्धमासाद्य ।
ये चोदात्ता भावास्ते सर्वे पृष्ठतः कार्याः ॥ ३८ ॥
सर्वेषां काव्यानां नानारसभावयुक्तियुक्तानाम् ।
निर्वहणं कर्तव्यं नित्यं हि रसोऽद्भुतस्तज्ज्ञैः ॥ ३९ ॥
नाटकलक्षणमेतन् मया समासेन प्रकीर्तितम् ।
विविधं प्रकरणमतःपरमहं लक्षणयुक्त्या प्रवक्ष्यामि ॥ ४० ॥
यत्र कविरात्मबुद्ध्या वस्तु शरीरं नायकं चैव ।
औत्पत्तिकं प्रकुरुते तज् ज्ञेयं प्रकरणं नाम ॥ ४१ ॥
यदनायकहार्यकार्यं प्रकरोत्यद्भुतगुणयुक्तम् ।
प्रकरणमिति तद् विद्याद् बीजं बीजार्थसंयुक्तम् ॥ ४२ ॥

यन् नाटके मयोक्तं वस्तु शरीरं समाश्रयोपेतम्।
तत् प्रकरणेऽपि कार्यं केवलमुत्पाद्यवस्तु स्यात्॥ ४३॥
विप्रवणिक्सचिवानां पुरोहितामात्यसार्थवाहानाम्।
चरितं यन् नैकविधं ज्ञेयं तत् प्रकरणं नाम॥ ४४॥
नोदात्तनायककृतं न दिव्यचरितं न राजसम्भोगः।
बाह्यजनसंयुक्तं ज्ञेयं तत् प्रकरणं नाम॥ ४५॥
दासविटश्रेष्ठियुतं वेशस्त्र्युपचारकारणोपेतम्।
मन्दकुलस्त्रीचरितं काव्यं कार्यं प्रयोगे तु॥ ४६॥
सचिवश्रेष्ठिब्राह्मणपुरोहितामात्यसार्थवाहानाम्।
गृहवार्ता यत्र भवेन् न तत्र वेश्याङ्गना कार्या॥ ४७॥
यदि वेशयुवतियुक्तं न कुलस्त्रीसङ्गमर्हति।
तत्राऽप्यकुलजनप्रयुक्तं न वेशयुवतिर्भवेत् तत्र॥ ४८॥
यदि क्वाकरणयुक्त्या* वेशकुलस्त्रीकृतोपचारं स्यात्।
अविकृतभाषाचारं तत्र तु पाठ्यं प्रयोक्तव्यम्॥ ४९॥
प्रकरणनाटकविषये पञ्चाद्या दश परास्तथा चैव।
अङ्काः कर्तव्याः स्युर्नानारसभावसंयुक्ताः॥ ५०॥
मध्यमपुरुषैर्नित्यं योज्यो विष्कम्भकोऽपि तत्त्वज्ञैः।
संस्कृतवचनानुगतः सङ्क्षिप्तार्थः प्रवेशकवत्॥ ५१॥
शुद्धः सङ्कीर्णो वा द्विविधो विष्कम्भकोऽपि कर्तव्यः।
मध्यमपात्रैः शुद्धः सङ्कीर्णो नीचमध्यकृतः॥ ५२॥

---

* प्राकरण्ययुक्त्येति सम्भवपाठः।

अङ्कान्तरालविहितः प्रवेशकोऽर्थक्रियामभिवीक्ष्य ।
सङ्क्षेपात् सन्धीनामर्थानां चैव कर्तव्यः ॥ ५३ ॥
अनयोश्च बन्धयोगादन्यो भेदः प्रयोक्तृभिः कार्यः ।
प्रख्यातस्त्वितरो वा नाटीसञ्ज्ञाश्रिते काव्ये ॥ ५४ ॥
स्त्रीप्रयोगचतुरङ्का ललिताभिनयात्मिका सुविहिताङ्गी ।
बहुगीतनृत्यवाद्यरतिसम्भोगात्मिका चैव ॥ ५५ ॥
राजोपचारयुक्त्या शृङ्गाराभिनयभावनाटिका ज्ञेया ।
प्रकरणनाटकनाटीलक्षणमुक्तं मया समासेन ॥ ५६ ॥
वक्ष्याम्यतःपरं लक्षणयुक्त्या समवकारम् ।
देवासुरबीजकृतः प्रख्यातोदात्तनायकश्चैव ॥ ५७ ॥
अङ्कस्तथा त्रिकपटः त्रिविद्रवः स्यात् त्रिशृङ्गारः ।
द्वादशनायकबहुलो ह्यष्टादशनायिकासमाप्यश्च ॥ ५८ ॥
वक्ष्याम्यस्याङ्कविधिं यावत्यो नाटिका यत्र ।
अङ्कस्तु सप्रसहनः सविद्रवः सकपटः सवीथीकः ॥ ५९ ॥
द्वादशनाडीविहितः प्रथमः कार्यकृतोपेतः ।
कार्यस्तथा द्वितीयः समाश्रितो नाटिकास्ततस्त्रस्त्र ॥ ६० ॥
वस्तुसमापनविहितो द्विनाडिकः स्यात् तृतीयस्तु ।
नाडीसञ्ज्ञा ज्ञेया मानं कालस्य यन् मुहूर्तार्धम् ॥ ६१ ॥
तन् नाडिकाप्रमाणं यथोक्तमङ्केषु संयोज्यम् ।
अङ्कान्ते सम्बन्धः कर्तव्ये काव्यबन्धमासाद्य ॥ ६२ ॥
अर्थं हि समवकारे ह्यप्रतिबन्धमिच्छन्ति ।
युद्धजलसम्भवो वा ह्यग्निगजेन्द्रसम्भवो वाऽपि ॥ ६३ ॥

नगरोपरोधजो वा विज्ञेयो विद्रवस्त्रिविधः।
वस्तुगतिक्रमविहितो दैववशाद् वा परप्रयुक्तो वा ॥ ६४ ॥
सुखदुःखोत्पत्तिकृतस्त्रिविधः कपटाश्रयो ज्ञेयः।
त्रिविधश्चाऽत्र विधिज्ञैः पृथक् पृथक् काव्ययोगविहितार्थः॥६५॥
त्रिविधकृतश्शृङ्गारो ज्ञेयो धर्मार्थकामेषु।
यत्र तु धर्मसमापकमात्महितं भवति साधनं बहुधा॥६६॥
व्रतनियमतपोयुक्तो ज्ञेयोऽसौ धर्मशृङ्गारः॥ ६७ ॥
अर्थस्येच्छायोगाद् बहुधा चैवाऽर्थतोऽर्थशृङ्गारः।
सम्यक्प्रयोगविषयेष्वर्थार्थिकान्यानि च चारयति यत्र॥६८॥
कन्याविलोभनं वै प्राप्य स्त्रीपुंसयोस्तु रहः।
रम्यं वा निभृतं वा विज्ञेयः कामशृङ्गारः॥ ६९ ॥
उष्णिग् वाऽनुष्टुब् वा छन्दःसु च यानि बन्धकुटिलानि।
वृत्तानि समवकारे कविभिस्तानि प्रयोज्यानि॥ ७० ॥
एवं कार्यस्तज्ज्ञैर्नानारससंश्रयः समवकारे।
अत ऊर्ध्वं व्याख्यास्ये लक्षणमीहामृगस्याऽपि॥ ७१ ॥
दिव्यपुरुषाश्रयकृतो दिव्यस्त्रीकारणोपगतयुक्तः॥
सुविहितवस्तुप्रहितो विप्रत्ययकारकश्चैव॥ ७२ ॥
उद्धतपुरुषप्रायः स्त्रीरोषग्रथितकाव्यबन्धश्च।
सङ्क्षोभविद्रवकृतः सम्फेटकृतस्तथैव॥ ७३ ॥
स्त्रीभेदनापहरणे प्रमर्देनाऽप्राप्तस्तु शृङ्गारः।
ईहामृगस्तु कार्यस्सतुरङ्कविभूषितश्चैव॥ ७४ ॥
यद् व्यायोगे कार्यं ये पुरुषा वृत्तयो रसाश्चैव।

ईहामृगेऽपि ते स्युः केवलमेतत्त्वयोगः ॥ ७५ ॥
यत्र तु वधेप्सितानां वन्धो ह्युदयो भवेद्धि पुरुषाणाम् ।
किञ्चिद् व्याजं कृत्वा तेषां युद्धं समयितव्यम् ॥ ७६ ॥
ईहामृगस्य लक्षणमित्युक्तं चतुरस्रमिदं समासयोगेन ।
डिमलक्षणं तु भूयो लक्षणयुक्त्या प्रवक्ष्यामि ॥ ७७ ॥
प्रख्यातवस्तुविषयः प्रख्यातोदात्तनायकश्चैव ।
षट्त्रिंशल्लक्षणयुक्तश् चतुरङ्को वै डिमः कार्यः ॥ ७८ ॥
शृङ्गारहास्यवर्जितः शेषैरन्यैः समायुक्तः ।
दीप्तरसकाव्ययोनिर् नानाचित्रो डिमः कार्यः ॥ ७९ ॥
निर्घातचन्द्रसूर्योपरागसोल्कावपातसंयुक्तः ।
युद्धनियुद्धनिबद्धसम्फोटस्तत्र कर्तव्यः ॥ ८० ॥
मायेन्द्रजालबहुलबहुपुरुषोत्थानभेदसंयुक्तः ।
देवभुजगेन्द्रराक्षसयक्षपिशाचावकीर्णश्च ॥ ८१ ॥
षोडशनायकबहुलः सात्त्वत्यारभटिसंयुक्तः ।
कार्यो डिमः प्रयत्नात् तज्ज्ञैर्नानाश्रयविशेषः ॥ ८२ ॥
व्यायोगः सुविधिज्ञैः कार्यः प्रख्यातनायकशरीरः ।
स्त्रीजनयुक्तस्तु डिमस्त्वेकाहकृतस्तथा चैव ॥ ८३ ॥
बहवस्तत्र तु पुरुषा व्यायच्छन्ते यथा समवकारे ।
न च तत्प्रमाणस्त्वेकाङ्कः संविधातव्यः ॥ ८४ ॥
नरदिव्यनायककृतः कार्यो राजर्षिनायकनिबद्धम् ।
युद्धनियुद्धाधर्षणसम्फोटकृतश्च कर्तव्यः ॥ ८५ ॥
एवंविधस्तु कार्यो व्यायोगो दीप्तकाव्यरसयोनिः ।

वक्ष्याम्यतःपरमहं लक्षणमुत्सृष्टिकाङ्कस्य ।
प्रख्यातवस्तुविषयोऽप्रख्यातः कदाचिदेव स्यात् ॥ ८६ ॥
दिव्यपुरुषैर्वियुक्तः शेषैरन्यैर्भवेत् पुम्भिः ।
करुणरसप्रायकृतो निवृत्तबद्धोद्धतप्रहारस्तु ॥ ८७ ॥
स्त्रीपरिदेवनबहुलो निर्वेदितवाक्यभाषश्च ।
नातिव्यायतवेश्म सात्त्वत्यारभटिकैशिकीहीनः ॥ ८८ ॥
कार्यः काव्यविधिज्ञैः सततं चोत्सृष्टिकाङ्कस्तु ।
यद् दिव्यनायककृतं काव्यं सङ्ग्रामयुद्धवधयुक्तम् ॥ ८९ ॥
तद् भारते तु वर्षे कर्तव्यं काव्यबन्धेषु ।
कस्माद् भारतमिष्टं वर्षेष्वन्येषु नित्यकष्टं हि ॥ ९० ॥
हृद्या सर्वा भूमिः शुभगन्धा काञ्चनी चैव ।
उपवनगमनक्रीडाविहारनारीरतिप्रमोदाः स्युः ॥ ९१ ॥
तेषु हि सर्वेषु सदा नो दुःखं नाऽपि वा शोकः ।
यत् तेषामधिवासाः पुराणवादेषु सर्वतः कथिताः ॥९२॥
सम्भोगस्तेषु भवेत् कर्मारम्भास्तथा ह्यस्मिन् ।
प्रहसनमिति विज्ञेयं द्विविधं शुद्धं तथा च सङ्कीर्णम् ॥९३॥
तस्य व्याख्यास्याम्यहं पृथक् पृथग् लक्षणविशेषान् ।
भगवत्तापसविप्रैरन्यैरपि हास्यवादसम्पन्नम् ॥ ९४ ॥
नीचजनसंयुक्तं परिहासाभाषणप्रायम् ।
अविकृतभाषाचारं विशेषभावोपहासरचितपदम् ॥ ९५ ॥
नियतगतिवस्तुविषयं शुद्धं ज्ञेयं प्रहसनं तु ।
वेश्यानपुंसकविटैर्वानिकदासीजनेन वा कीर्णम् ॥ ९६ ॥

अनिवृत्तवेषपरिच्छेदचेष्टितकरणैश्च सम्पन्नम् ।
लोकोपचारयुक्ता या वार्ता यश्च दम्भसंयोगः ॥ ९७ ॥
स प्रहसने न योज्यो धूर्तजनविवादसंयुक्तः ।
उद्घात्यकादिभिरिदं वीथ्यङ्गैर्मिश्रितं भवति मिश्रम् ॥९८॥
भाणस्य विधानमतो लक्षणयुक्त्या प्रवक्ष्यामि ।
आत्मानुभूतशंसी परसंस्तववर्णनाविशेषस्तु ॥ ९९ ॥
द्विविधाश्रियो हि भाणो विज्ञेयस्त्वेकपात्रश्च ।
परवचनमात्मसंस्थं प्रतिवचनैः सोत्तरैर्ग्रथितवाक्यम् ॥१००॥
धूर्तविटसम्प्रयोज्यो नानावस्थान्तरात्मकश्चैव ।
वस्तुसमाङ्कः कार्यः सततं काव्ये बुधैर्भाणः ॥ १०१ ॥
वीथी स्यादेकाङ्का द्विपात्रहार्या तथैकहार्या वा ।
अधमोत्तममध्याभिर्युक्ता स्यात् प्रकृतिभिस्तिसृभिः ॥१०२॥
सर्वरसभावयुक्ता विज्ञेया वीथिका ह्यथैतस्याः ।
अङ्गानां वक्ष्येऽहं लक्षणमधुना यथोद्देशम् ॥ १०३ ॥
उद्घात्यकावलगिते अवस्यन्दितकं तथा ।
असत्प्रलापश्च तथा प्रपञ्चो नालिकाऽपि या ॥ १०४ ॥
*वाक्केल्यधिबलं चैव छलं व्याहार एव च ।
मृदवं त्रिगतं चैव ज्ञेयं गण्डमथाऽपि वा ॥ १०५ ॥
पदानि च गतार्थानि तदर्थगतये नराः ।
योजयन्ति पदैरन्यैस्तदुद्घात्यकमुच्यते ॥ १०६ ॥

---

* वागित्यत्र पुस्तके पतितं ।

यत्राऽन्यस्मिन् समावेश्य कार्यमन्यत् प्रसाध्यते।
परानुरोधात् तज् ज्ञेयं नाम्नाऽवलगितं बुधैः ॥ १०७ ॥
आक्षिप्य कञ्चिदेवाऽर्थं शुभाशुभसमुत्थितम्।
यद् वादबुद्धिनैपुण्यात् तदवस्यन्दितं भवेत् ॥ १०८ ॥
असम्बद्धं तु यद् वाक्यमसम्बद्धं यदुत्तरम्।
असत्प्रलापस्तं चैव वीथ्यां सम्यक् प्रयोजयेत् ॥ १०९ ॥
यदसत्सम्भूतं वचनं संस्तवयुक्तं द्वयोः परस्परतः।
एकस्य चार्थहेतोः स हास्यजननः प्रपञ्चस्तु ॥ ११० ॥
हास्येनोपगतार्था प्रहेलिका नालिकेति विज्ञेया।
एकद्विप्रतिवचनां तां केलीं नाम जानीयुः ॥ १११ ॥
परवचनमात्मनश्चोत्तरोत्तरसमुद्भवं द्वयोर्यच्च।
अन्यार्थविशेषकमधिबलमिति बहुविधैर्ज्ञेयम् ॥ ११२ ॥
अन्यार्थमेव वाक्यं छलमिति सन्धानहास्यरोषकरम्।
प्रत्यक्षवृत्तिकथितो व्याहारो हास्यलेशार्थः ॥ ११३ ॥
यद्गुणदोषीकरणं दोषगुणीकरणमेव च।
यैर्हेतुभिरुपपन्नार्थैस्तन् मृदवं नामविज्ञेयम् ॥ ११४ ॥
यथाऽनुदात्तवचनं त्रिधा विभक्तं भवेत् प्रयोगे तु।
हास्यरससम्प्रयुक्तं तत् त्रिगतं नाम विज्ञेयम् ॥ ११५ ॥
संरम्भसम्भ्रमयुतं विवादयुक्तं तदापवादकृतम्।
बहुवचनापेक्षकृतं गण्डमिति वदन्ति तत्त्वज्ञाः ॥ ११६ ॥
अन्यान्यपि लास्यविधावङ्गानि तु नाटकोपयोगानि।
अस्माद् विनिःसृतानि तु भाण इवैकप्रयोज्यानि ॥ ११७ ॥

गेयपदं स्थितपाठ्यमासीनं पुष्पगण्डिका ।
प्रच्छेदकस्त्रिमूढाख्यं सैन्धवं चेद् विमूढकम् ॥ ११८ ॥
उत्तमोत्तमकं चैव उक्तप्रत्युक्तमेव च ।
लास्ये दशविधं ह्येतदङ्गनिर्देशलक्षणम् ॥ ११९ ॥
आसनेषूपविष्टैर्यत् तन्त्रीभाण्डोपबृंहितम् ।
गायनैर्गीयते शुष्कं तद् गेयपदमुच्यते ॥ १२० ॥
बहुचारीसमायुक्तं पञ्चपाणिकलानुगम् ।
वत्सपुच्छेन वा युक्तं स्थितपाठ्यं विधीयते ॥ १२१ ॥
आसीनमासनस्थस्य सर्वतोद्यविवर्जितम् ।
अप्रसारितगात्रं च चिन्ताशोकान्वितं च यत् ॥ १२२ ॥
नृत्तं तु द्विविधं यत्र गीतमातोद्यमेव च ।
स्त्रियः पुंवच्च चेष्टन्ते सा ज्ञेया पुष्पगण्डिका ॥ १२३ ॥
प्रच्छेदकः स विज्ञेयो यत्र चन्द्रातपाहता ।
*स्त्रियः स्त्रियेषु न सज्जन्ते ह्यपि विक्रियकारिषु ॥ १२४ ॥
अनिष्ठुरश्लक्ष्णपदं समवृत्तैरवं कृतम् ।
नाट्यं पुरुषभावाढ्यं त्रिमूढकमुदाहृतम् ॥ १२५ ॥
रूपवाद्यादिसंयुक्तमव्यक्तकरणाश्रयम् ।
पाठ्यहीनं स्वभावोक्त्या विदुः सैन्धवकं बुधाः ॥ १२६ ॥
मुखप्रतिमुखोपेतं चतुरस्रपदक्रमम् ।
स्पष्टभावरसोपेतं नानार्थं च विमूढकम् ॥ १२७ ॥
उत्तमोत्तमकं विद्यादनेककरणान्वितम् ।

---

* स्त्रियः प्रियेषु सज्जन्ते ह्यपि विप्रिय० इति समीचीनः पाठः ।

विचित्रैः श्लोकबन्धैश्च लीलाभावविभूषितम् ॥ १२८ ॥
कोपप्रसादजननमधिक्षेपजनाश्रयम् ।
उक्तप्रत्युक्तमेवं स्याच् चित्रगीतार्थयोजितम् ॥ १२९ ॥
भाणामुक्तितिलास्यं विज्ञेयं लेकपाति ह्यर्थत्वात् ।
प्रकरवदुक्तकाव्यं संस्तवयुक्तं द्विविधभावात् ॥ १३० ॥
एतेषां लास्यविधौ लक्षणमुक्तं मया तु विस्तरतः ।
तदिहैव तु यन्नोक्तं प्रसङ्गविनिवृत्तिहेतोस्तु ॥ १३१ ॥
इति दशरूपविधानं सर्वं प्रोक्तं मया हि लक्षणतः ।
पुनरस्य शरीरगतं सन्धिविधौ लक्षणं वक्ष्ये ॥ १३२ ॥
इति भारतीये नाट्यशास्त्रे दशरूपकलक्षणं नामाऽध्यायो ऽष्टादशः ॥ * ॥

---

## अथैकोनविंशतितमोऽध्यायः ।

इतिवृत्तं हि नाट्यस्य शरीरं परिकीर्तितम् ।
पञ्चभिः सन्धिभिस्तस्य विभागः सम्प्रलक्षितः ॥ १ ॥
इतिवृत्तं द्विधा चैव बुधस्तु परिकल्पयेत् ।
आधिकारिकमेकं स्यात् प्रासङ्गिकमथाऽपरम् ॥ २ ॥
यत्कार्यं हि फलप्राप्त्या समर्थं परिकल्प्यते ।
तदाधिकारिकं ज्ञेयमन्यत् प्रासङ्गिकं विदुः ॥ ३ ॥
कवेः प्रयत्नान् नेतॄणां युक्तानां विध्युपाश्रयात् ।
कल्प्यते हि फलप्राप्तिः समुत्कर्षात् फलस्य तु ॥ ४ ॥

कारणात् फलयोगस्य वृत्तं स्यादाधिकारिकम् ।
तस्योपकरणार्थं तु कीर्त्यते ह्यानुषङ्गिकम् ॥ ५ ॥
संसाध्ये फलसाध्ये तु व्यापारः कारकस्य यः ।
तस्याऽऽनुपूर्व्याद् विज्ञेयाः पञ्चावस्थाः प्रयोक्तृभिः ॥ ६ ॥
प्रारम्भश्च प्रयत्नश्च तथा प्राप्तेश्च सम्भवः ।
नियता च फलप्राप्तिः फलयोगश्च पञ्चमः ॥ ७ ॥
औत्सुक्यं बन्धभात्रस्य यो बीजस्य निबध्यते ।
महतः फलयोगस्य स खल्वारम्भ इष्यते ॥ ८ ॥
अपश्यतः फलप्राप्तिं यो व्यापारः फलं प्रति ।
परं चौत्सुक्यगमनं प्रयत्नः सम्प्रकीर्तितः ॥ ९ ॥
ईषत् प्राप्तिर्यदौचित्यं फलस्य परिकल्प्यते ।
भावमात्रेण तां प्राज्ञैर्विधिज्ञाः प्राप्तिसम्भवम् ॥ १० ॥
रूपक्रियाफलप्राप्तिर्यदा भावेन पश्यति ।
नियतां तां फलप्राप्तिं सगुणां परिचक्षते ॥ ११ ॥
अभिप्रेतं समग्रं च प्रतिरूपं क्रियाफलम् ।
इति योगे भवेद् यत्र फलयोगः प्रकीर्तितः ॥ १२ ॥
इतिवृत्तादिकार्यस्य प्रारब्धस्य फलार्थिभिः ।
यथाऽनुक्रमते तास्तु पञ्चावस्था भवन्ति हि ॥ १३ ॥
तासां स्वभावभिन्नानां परस्परसमागमात् ।
विन्द्यात् स एकभावेन फलहेतुः प्रकीर्तितः ॥ १४ ॥
यद् वृत्तं हि समारब्धं पुरस्तादाविकारिकम् ।
तदारम्भादिकर्तव्यं फलान्तं च यदा भवेत् ॥ १५ ॥

पूर्णसन्धि तु तत् कार्यं हीनसन्ध्यपि वा पुनः ।
नियमात् पञ्चसन्धिः स्याद्धीनसन्ध्यथ कारणात् ॥ १६ ॥
चतुर्थस्यैकलोपेन द्विलोपे त्रिचतुर्थयोः ।
द्वितीयत्रिचतुर्थानां त्रिलोपे लोप इष्यते ॥ १७ ॥
प्रासङ्गिके परार्थत्वान् न ह्येष नियमो भवेत् ।
यद् वृत्तं सम्भवेत् किञ्चित् तद् योज्यमविरोधतः ॥ १८ ॥
इतिवृत्ते यथाऽवस्थात् पञ्चारम्भादिकाः स्मृताः ।
अर्थप्रकृतयः पञ्च तदा बीजादिका अपि ॥ १९ ॥
अर्थप्रकृतयः पञ्च ससन्धिषु प्रकीर्तिताः ।
बीजं बिन्दुः पताका च प्रकरी कार्यमेव च ॥ २० ॥
स्वल्पमात्रं समुत्सृष्टं बहुधा यद् विसर्पति ।
फलावसानं यच् चैवं बीजं तदिह कीर्तितम् ॥ २१ ॥
प्रयोजनानां विच्छेदे यदविच्छेदकारणम् ।
यावत् समाप्तिं कार्यस्य स बिन्दुरिति कीर्तितः ॥ २२ ॥
यद् वृत्तं हि फलार्थं स्यात् प्रधानस्याऽपकारकम् ।
प्रधानवच् च कल्प्येत सा पताकेति कीर्तिता ॥ २३ ॥
फलं ब्रूहि फलार्थं स्यात् प्रधानस्याऽपकारकम् ।
प्रधानवच् च कल्प्येत परार्थं केवलं बुधैः ॥ २४ ॥
अनुबन्धविहीनानां यथावदिति निर्दिशेत् ।
यदाधिकारिकं कार्यं पूर्वमेव प्रकीर्तितम् ॥ २५ ॥
यदर्थी यः समारम्भस्तत् कार्यं परिकीर्तितम् ।
एतेषां यस्य येनाऽर्थो यतस्य गुण इष्यते ॥ २६ ॥

तत्प्रधानं तु कर्तव्यं गुणभूतान्यतः परम् ।
एकोऽनेकोऽपि वा सन्धिः पताकायां तु यो भवेत् ॥ २७ ॥
प्रधानार्थानुयायित्वादनुसन्धिः प्रकीर्त्यते ।
आगर्भादाविमर्शाद् वा पताका विनिवर्तते ॥ २८ ॥
कस्माद् यस्माद् निबन्धोऽस्याः परार्थः परिकीर्त्यते ।
यत्राऽन्यस्मिंश्चिन्त्यमाने तल्लीनोऽन्यः प्रयुज्यते ॥ २९ ॥
आगन्तुकेन भावेन पताकास्थानकं तु तत् ।
सहसैवाऽर्थसम्पत्तिर्गुणवत्युपकारतः ॥ ३० ॥
पताकास्थानमित्याद्यमलङ्कारार्थसंयुतम् ।
वचः सातिशयश्लिष्टं काव्यबन्धसमाश्रयम् ॥ ३१ ॥
पताकास्थानकमिदं द्वितीयं परिकल्पितम् ।
अर्थोपक्षेपणं यत्र लीनं सविनयं भवेत् ॥ ३२ ॥
श्लिष्टं प्रत्युत्तरोपेतं तृतीयमिदमिष्यते ।
द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः ॥ ३३ ॥
उपपत्त्या युतं यत् तच् चतुर्थं समुदाहृतम् ।
चतुःपताकापरमं नाटके काव्यमिष्यते ॥ ३४ ॥
पञ्चभिः सन्धिभिर्युक्तं तत् प्रवक्ष्याम्यतः परम् ।
मुखं प्रतिमुखं चैव गर्भो विमर्श एव च ॥ ३५ ॥
तथा निर्वहणं चैव नाटके पञ्च सन्धयः ।
पञ्चभिः सन्धिभिर्युक्तं प्रधानमनुकीर्त्यते ॥ ३६ ॥
शेषाप्रधानसन्धीनामनुग्राह्यास्तु सन्धयः ।
यत्र बीजसमुत्पत्तिर्नानार्थरससम्भवा ॥ ३७ ॥

काव्ये शरीरानुगता तन्मुखं परिकीर्तितम्।
बीजस्योद्घाटनं यत्तु दृष्टं नष्टमिव क्वचित्॥ ३८॥
मुखन्यस्तस्य सर्वस्य तद् वै प्रतिमुखं स्मृतम्।
उद्भेदस्तस्य बीजस्य प्राप्तिरप्राप्तिरेव च॥ ३९॥
पुनस्याऽन्वेषणं यत्र स गर्भ इति सञ्ज्ञितः।
गर्भान् निर्भिन्नबीजार्थो विकल्पनकृतोऽपि वा॥ ४०॥
क्रोधव्यसनजो वाऽपि स विमर्श इति स्मृतः।
समानयनमर्थानां व्याख्यानां तु सबीजिनाम्॥ ४१॥
नानाभावोत्तराणां च भवेन् निबर्हणं च तत्।
एते तु सन्धयो ज्ञेया नाटकस्य प्रयोक्तृभिः॥ ४२॥
तथा प्रकरणस्याऽपि शेषाणां च निबोधत।
डिमः समवकारश्च चतुःसन्धी प्रकीर्तितौ॥ ४३॥
न तयोर्विमर्शस्तु स्यान् न च वृत्तिस्तु कैशिकी।
व्यायोगेहामृगौ वाऽपि सदाकार्यौ त्रिसन्धिकौ॥ ४४॥
गर्भाविमर्शौ न स्यातां तयोर्वृत्तिश्च कैशिकी।
द्विसन्धि तु प्रहसनं वीथ्यङ्कौ भाण एव च॥ ४५॥
मुखनिबर्हणे तेषां कर्तव्ये कैशिकीं विना।
एवं तु सन्धयः कार्या दशरूपप्रयोक्तृभिः॥ ४६॥
पुनरेषां तु सन्धीनामङ्गकल्पान् निबोधत।
सन्धीनां यानि वृत्तानि प्रदेशमनुपूर्वशः॥ ४७॥
सम्यङ्गुणप्रयुक्तानि तान्यङ्गान्यवबोधयेत्।
इष्टस्याऽर्थस्य रचना वृत्तान्तस्याऽनुपक्षयः॥ ४८॥

रागप्राप्तिः प्रयोगस्य गुप्तानां चैव गूहनम्।
आश्चर्यवदविख्यातं प्रकाश्यानां प्रकाशनम्॥ ४९ ॥
अङ्गहीनं तथा काव्यं न प्रयोगक्षमं भवेत्।
काव्यं यदपि हीनार्थं सम्यगङ्गैः समन्वितम्॥ ५० ॥
दीप्तत्वात् तु प्रयोगस्य शोभामेति न संशयः।
उदात्तमपि यत् काव्यं स्यादङ्गैः परिवर्जितम्॥ ५१ ॥
हीनत्वाद् विप्रयोगस्य नैव तद् रञ्जयेन् मनः।
तस्मात् सन्धिप्रदेशेषु यथायोगं यथारसम्॥ ५२ ॥
कविताङ्गानि कार्याणि प्रदेशांस्तु निबोधत।
सामभेदप्रदानं च दण्डस्य बध एव च॥ ५३ ॥
प्रत्युत्पन्नमतित्वं च गोत्रस्खलितमेव च।
साहसं च भयं चैव ह्रीर्माया क्रोध एव च॥ ५४ ॥
ओजः संवरणं भ्रान्तिस्तथा हेत्ववधारणम्।
दूतो लेखस्तथा स्वप्नश्चित्रं मन्द इति द्विधा*॥ ५५ ॥
सन्ध्यन्तराणि सन्धीनां प्रदेशास्त्वेकविंशतिः।
एते विशेषाः सन्धिजाः स्युः सन्धेर्यस्त्वर्थयोगतः॥ ५६ ॥
पाठ्याङ्गान्यथ योगेन सन्ति तानि निबोधत।
इतिपाद्य उपक्षेपः परिन्यासो विलोभनम्॥ ५७ ॥
युक्तिः प्राप्तिः समाधानं विधानं परिभावना।
उद्भेदः करणं भेदो द्वादशाङ्गानि वै मुखे॥ ५८ ॥

---

* मद इति द्विजा इति श्लो० १०८ पठ्यते।

तथा प्रतिमुखे चैव वक्ष्याम्यङ्गानि नामतः ।
विलासः परिसर्पश्च विधूतं शमनं तथा ॥ ५९ ॥
नर्म नर्मद्युतिश्चैव तथा च प्रगणं पुनः ।
निरोधश्चैव विज्ञेयः पर्युपासनमेव च ॥ ६० ॥
पुष्पं वज्रमुपन्यासो वर्णसंहार एव च ।
एवमङ्गानि बीजस्य सम्प्रसिद्धिकराणि च ॥ ६१ ॥
एतानि वै प्रतिमुखे गर्भे चैव निबोधत ।
अभूताहरणं मार्गो रूपोदाहरणे क्रमः ॥ ६२ ॥
सङ्ग्रहश्चाऽनुमानं च प्रार्थना क्षिप्रमेव च ।
तोटकाधिबले चैव ह्युद्वेगो विद्रवस्तथा ॥ ६३ ॥
एतान्यङ्गानि वै गर्भेऽथ विमर्शे निबोधत ।
अपवादश्च सम्फेटो हि द्रवः शक्तिरेव च ॥ ६४ ॥
प्रसङ्गो व्यवसायश्च विरोधश्च प्रकीर्तितः ।
प्ररोचना विचलनमादानं छलनं तथा ॥ ६५ ॥
व्याहारश्चाऽपि द्युतिश्च विमर्शेऽङ्गान्यमूनि च ।
सन्धिर्विबोधो ग्रथनं निर्णयः परिभाषणम् ॥ ६६ ॥
कृतिः प्रसादानन्दौ च समयश्चोपगूहनम् ।
आभाषणं पूर्वभावः काव्यसंहार एव च ॥ ६७ ॥
प्रशस्तिरिति संहारे सन्ध्यङ्गानि चतुर्दश ।
सन्धौ निवर्हणाख्ये तु कर्तव्यानि प्रयोक्तृभिः ॥ ६८ ॥
एतेषां लर्थसम्बद्धं पुनर्वक्ष्यामि लक्षणम् ।
काव्यस्याऽर्थसमुत्पत्तिरुपक्षेप इति स्मृतः ॥ ६९ ॥

यदुत्पन्नार्थबाहुल्यं ज्ञेयः परिकरस्तु सः।
भविष्यद्वस्तुकथनं परिन्यासं प्रचक्षते ॥ ७० ॥
गुणनिर्वर्णनं तज्ज्ञैर्विलोभनमिति स्मृतम्।
सम्प्रधारणमर्थानां युक्तिरित्यभिधीयते ॥ ७१ ॥
सुखार्थस्योपगमनं प्राप्तिरित्यभिधीयते।
बीजार्थस्योपगमनं तत् समाधानमुच्यते ॥ ७२ ॥
सुखदुःखकृतो योऽर्थस्तद् विधानमिति स्मृतम्।
कुतूहलोत्तरावेशो विज्ञेया परिभावना ॥ ७३ ॥
बीजार्थस्य प्ररोहो यः स उद्भेद इति स्मृतः।
प्रकृतार्थसमारम्भः करणं नाम तद् भवेत् ॥ ७४ ॥
सङ्घार्थभेदनार्थो यः स भेद इति कीर्तितः।
सम्भोगो रतिसम्पन्नो विलास इति कीर्तितः ॥ ७५ ॥
दृष्टनष्टानुसरणं परिसर्प इति स्मृतः।
कृतस्याऽनुनयस्याऽऽदौ विधूतं ह्यपरिग्रहः ॥ ७६ ॥
तस्योपशमनं यत् तु शमनं नाम तद् भवेत्।
क्रीडाविलोभनार्थं तु हास्यं नर्म इति स्मृतम् ॥ ७७ ॥
उत्तरोत्तरवाक्यं तु भवेत् प्रगणनं पुनः।
या तु व्यसनसम्प्राप्तिर्निरोधः स च कीर्तितः ॥ ७८ ॥
क्रुद्धस्याऽनुनयो यस्तु भवेत् तत्पर्युपासनम्।
विशेषवचनं यत् तु तत् पुष्पमिति सञ्ज्ञितम् ॥ ७९ ॥
विरूद्धवचनप्रायं वज्रमित्यभिधीयते।
उपपत्तिकृतो योऽर्थ उपन्यासस्तु स स्मृतः ॥ ८० ॥

चातुर्वर्ण्याभिगमनं वर्णसंहार इष्यते ।
एतत्प्रतिमुखेऽङ्गानि अथ गर्भस्तु लक्षणम् ॥ ८१ ॥
कपटाश्रयं यद् वाक्यमभूताहरणं विदुः ।
तत्त्वार्थवचनं चैव मार्ग इत्यभिधीयते ॥ ८२ ॥
चित्रार्थसमवायो यः तद् रूपमिति कीर्तितम् ।
यत् तु सातिशयं वाक्यं तदुदाहरणं स्मृतम् ॥ ८३ ॥
तत्त्वोपलब्धिर्वाक्यस्य क्रम इत्यभिधीयते ।
सामदानार्थसंयुक्तः सङ्ग्रहः परिकीर्तितः ॥ ८४ ॥
रूपानुरूपगमनमनुमानमिति स्मृतम् ।
कार्यानुनयपूर्वस्तु नियोगः प्रार्थना भवेत् ॥ ८५ ॥
गर्भस्योद्भेदनं यत् तु तदुपक्षिप्तमुच्यते ।
संरम्भवचनप्रायं तोटकं त्विह सञ्ज्ञितम् ॥ ८६ ॥
कपटेनाऽभिसन्धानं ज्ञेयं चाऽधिबलं बुधैः ।
भयं नृपारिदस्यूत्थमुद्वेगः परिकीर्तितः ॥ ८७ ॥
शङ्काभयत्रासकृतो द्रव एव हि विद्रवः ।
गर्भाङ्गलक्षणं प्रोक्तं विमर्शेऽथ निबोधत ॥ ८८ ॥
दोषप्रख्यापनं यत् स्यादपवादस्तु स स्मृतः ।
रोषग्रथितवाक्यं तु सम्फोटः परिकीर्तितः ॥ ८९ ॥
गुरुव्यतिक्रमो यस्तु विज्ञेयो हि द्रवस्तु सः ।
विरोधप्रशमो यस्तु सा शक्तिः परिकीर्तिता ॥ ९० ॥
प्रसङ्गश्चैव विज्ञेयो वाक्यैराधर्षयोजितैः ।
व्यवसायस्तु कर्तव्यः प्रतिज्ञाहेतुसंश्रयः ॥ ९१ ॥

उत्तरोत्तरवाक्यं तु विरोध इति सञ्ज्ञितः ।
प्ररोचना च विज्ञेया संहारार्थप्रदर्शिनी ॥ ९२ ॥
अनुमानार्थसंयुक्तं विन्द्याद् विचलनं तथा ।
बीजकार्योपगमनमादानमिति कीर्तितम् ॥ ९३ ॥
अवमानादिजनितसम्मोहश्छलनं भवेत् ।
प्रत्यक्षकथनं यत् तु स व्याहार इति स्मृतः ॥ ९४ ॥
साधिक्षेपं वचो यत्र तद् द्युतिरिति सञ्ज्ञितम् ।
लक्षणं विमर्शाङ्गानां संहारे तु निबोधत ॥ ९५ ॥
मुखबीजोपगमनं सन्धिरित्यभिधीयते ।
कार्यस्याऽन्वेषणं यत् तु विबोध इति स स्मृतः ॥ ९६ ॥
उपक्षेपस्तु कार्याणां ग्रथनं नाम तद् भवेत् ।
अनुभूतार्थकथनं निर्णयः समुदाहृतः ॥ ९७ ॥
परिवादकृतं यत् स्यात् तदाहुः परिभाषणम् ।
लब्धस्याऽर्थस्य शमनं कृतिरित्यभिधीयते ॥ ९८ ॥
शुश्रूषाद्युपसम्पन्ना प्रसादः प्रीतिरुच्यते ।
समागमस्तु योऽर्थानाम् आनन्दः स तु कीर्तितः ॥ ९९ ॥
दुःखापनयनं चैव समयः स निगद्यते ।
अन्वग्भूतस्य सम्प्राप्तिर्भवेत् तदुपगूहनम् ॥ १०० ॥
दानमानविनिष्पन्नमाभाषणमुदाहृतम् ।
पूर्वभावस्तु विज्ञेयः सद्भिः कार्योपदेशकः ॥ १०१ ॥
वरप्रसादसम्प्राप्तिः काव्यसंहार इष्यते ।
देवद्विजनृपादीनां प्रशस्तिः स्यात् प्रसाधनम् ॥ १०२ ॥

यथा सन्धिषु कर्तव्यान्येतान्यङ्गानि रूपके ।
कविभिः काव्यकुशलैरसभावमपेक्ष्य तु ॥ १०३ ॥
सम्मिश्राणि कदाचित् तु द्वित्रियोगेन वा पुनः ।
कार्यं कालमवस्थां च ज्ञात्वा कार्याणि सन्धिषु ॥ १०४ ॥
एतेषामेव चाऽङ्गानां सम्बद्धान्यर्थयोगतः ।
सन्ध्यन्तराणि वक्ष्यामि लर्थोपक्षेपकाणि च ॥ १०५ ॥
सामभेदप्रदानं च दण्डश्च वध एव च ।
प्रत्युत्पन्नमतित्वं च गोत्रस्खलितमेव च ॥ १०६ ॥
साहसं च भयं चैव ह्रीर्माया क्रोध एव च ।
*ओजः संवरणं भ्रान्तिस्तथा हेत्ववधारणम् ॥ १०७ ॥
दूतो लेखस्तथा स्वप्नश्चित्रं मद इति द्विजाः ।
सन्ध्यन्तराणि सन्धीनां विशेषास्त्वेकविंशतिः ॥ १०८ ॥
विष्कम्भचूलिका चैव तथा चैव प्रवेशकः ।
अङ्कावताराङ्कमुखमर्थोपक्षेपपञ्चकम् ॥ १०९ ॥
मध्यमपुरुषनियोज्यो नाटकमुखसन्धिमात्रसञ्चार. ।
विष्कम्भकस्तु संस्कृतपुरोहितामात्यकञ्चुकिभिः ॥ ११० ॥
शुद्धः सङ्कीर्णो वा द्विविधो विष्कम्भकस्तु विज्ञेयः ।
मध्यमपात्रैः शुद्धः सङ्कीर्णो नीचमध्यकृतः ॥ १११ ॥
अन्तर्जवनिकासंस्थैः शून्यादिभिरनेकधा ।
अर्थोपक्षेपणं यत्तु क्रियते सा हि चूलिका ॥ ११२ ॥

---

* ऊज इत्यादर्शस्थितं ।

अङ्कान्तरानुसारी सङ्क्षेपार्थमधिकृत्य बिन्दूनाम्।
प्रकरणनाटकविषये प्रवेशको नाम विज्ञेयः ॥ ११३ ॥
नोत्तममध्यमपुरुषैराचरितो नाऽप्युदात्तवचनकृतः।
प्राकृतभाषाचारः प्रवेशको नाम विज्ञेयः ॥ ११४ ॥
अङ्कान्तरेऽथवाऽङ्के निपतति यस्मिन् प्रयोगमासाद्य।
बीजार्थयुक्तियुक्तो ज्ञेयो ह्यङ्कावतारोऽसौ ॥ ११५ ॥
विश्लिष्टमुखमङ्कस्य स्त्रिया वा पुरुषेण वा।
यदुपक्षिप्यते पूर्वं तदङ्कमुखमुच्यते ॥ ११६ ॥
वृत्तिवृत्त्यङ्गसम्पन्नपदार्थप्रकृतिचयम्।
पञ्चावस्थाभिनिष्पन्नैः पञ्चभिः सन्धिभिर्युतम् ॥ ११७ ॥
सन्ध्यन्तरैकविंशत्या चतुःषष्ठ्यङ्गसंयुतम्।
षट्त्रिंशल्लक्षणोपेतं गुणालङ्कारभूषितम् ॥ ११८ ॥
महारसं महाभोगमुदात्तवचनान्वितम्।
महापुरुषसञ्चारं साध्वाचारं जनप्रियम् ॥ ११९ ॥
सुश्लिष्टसन्धिसंयोगं सुप्रयोगं सुखाश्रयम्।
मृदुशब्दाभिधानं च कविः कुर्यात् तु नाटकम् ॥ १२० ॥
अवस्था या हि लोकस्य सुखदुःखसमुद्भवा।
नानापुरुषसञ्चारा नाटके सा भवेदिह ॥ १२१॥
न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला।
न तत् कर्म समायोगो नाटके यन् न दृश्यते ॥ १२२ ॥
योऽयं स्वभावो लोकस्य नानावस्थान्तरात्मकः।
साङ्गाभिनयसंयुक्तो नाटके संविधीयते ॥ १२३ ॥

देवतानामृषीणां च राज्ञां लोकस्य चैव हि ।
पूर्ववृत्तानुचरितं नाटकं नाम तद् भवेत् ॥ १२४ ॥
यस्मात् स्वभावं संहृत्य साङ्गोपाङ्गमतिक्रमैः ।
प्रयुज्यते जायते च यस्मात् तन् नाटकं स्मृतम् ॥ १२५ ॥
सर्वभावैः सर्वरसैः सर्वकर्मप्रवृत्तिभिः ।
नानावस्थान्तरोपेतं नाटकं संविधीयते ॥ १२६ ॥
यान्येकशिल्पजातानि एकरूपकृतानि च ।
तानि शेषाणि रूपाणि प्रयोज्यानि प्रयोक्तृभिः ॥ १२७ ॥
लोकस्य भावं सम्प्रेक्ष्य नराणां च बलाबलम् ।
सम्भोगं चैव युक्तिं च ततः कार्यं तु नाटकम् ॥ १२८ ॥
श्लोके प्रणश्यति प्रायो भवन्त्यविबुधा नराः ।
ये चाऽपि हि भविष्यन्ति येऽप्यल्पश्रुतबुद्धयः ॥ १२९ ॥
बुद्धयः कर्मशल्यानि वैचक्षण्यं बलानि च ।
सर्वाण्येतानि यदा लोकः विना नाद्यं प्रणश्यति ॥ १३० ॥
तदेवं लोकभावानां प्रसमीक्ष्य यथा क्रमम् ।
मृदुशब्दं यथार्थं च तज्ज्ञैः कार्यं तु लक्षणम् ॥ १३१ ॥
चेक्रीडिताद्यैः शब्दैस्तु काव्यबन्धा भवन्ति ये ।
वेश्या इव न भान्ति व कमण्डलुधरैर्द्विजैः ॥ १३२ ॥
दशरूपविधानं हि मया प्रोक्तं द्विजोत्तमाः ।
अतः परं प्रवक्ष्यामि वृत्तीनामिह लक्षणम् ॥ १३३ ॥

इति भारतीये नाट्यशास्त्रे अङ्गविकल्पो नाम एकोनविंशति-
तमोऽध्यायः ॥ ० ॥

## अथ विंशतितमोऽध्यायः ।

समुत्थानं तु वृत्तीनां व्याख्यास्याम्यनुपूर्वशः ।
तथा वस्तूद्भवं चैव काव्यानां च विकल्पनम् ॥ १ ॥
एकार्णवं जगत् कृत्वा भगवानच्युतो यदा ।
शेते स्म नागपर्यङ्के लोकान् सङ्क्षिप्य मायया ॥ २ ॥
अथ वीर्यबलोन्मत्तावसुरौ मधुकैटभौ ।
तर्जयामासतुर्देवं तरसा युद्धकाङ्क्षिणौ ॥ ३ ॥
निजबाहुविकृष्टौ तौ भूतभावनमव्ययम् ।
जानुभिर्मुष्टिभिश्चैव योधयामासतुः प्रभुम् ॥ ४ ॥
बहुभिः परुषैर्वाक्यैरन्योन्यस्पर्धयान्वितौ ।
नानाविक्षेपवचनैः कम्पयन्ताविवोदधिम् ॥ ५ ॥
तयोरनेकरूपाणि वचांसि वदतोस्तदा ।
श्रुत्वा आकम्पितमना द्रुहिणो वाक्यमब्रवीत् ॥ ६ ॥
किमियं भारती वृत्तिर्वाग्भिरेव प्रवर्तिता ।
उत्तरोत्तरसम्बन्धान् नन्विमौ निधनं नय ॥ ७ ॥
पितामहवचः श्रुत्वा प्रोवाच मधुसूदनः ।
कार्यहेतोर्मया ब्रह्मन् भारतीयं विनिर्मिता ॥ ८ ॥
वदतां वर भूयिष्ठा भारतीयं भविष्यति ।
अहमेतौ निहन्म्यद्य इत्युक्त्वा वचनं हरिः ॥ ९ ॥
शुद्धैरविकृतैरङ्गैः साङ्गहारैस्तदा भृशम् ।
योधयामास तौ दिव्यौ बाहुयुद्धविशारदौ ॥ १० ॥

भूमिसंस्थानसंयोगैः पदन्यासैर्हरेस्तदा ।
अतिभारोऽभवद् भूमेर्भारती तेन निर्मिता ॥ ११ ॥
वल्गितैः शार्ङ्गधनुषा तीव्रदीप्ततरैरथ ।
सत्त्वाधिकैरसम्भ्रान्तैः सात्त्वती च विनिर्मिता ॥ १२ ॥
विविधैरङ्गहारैश्च देवो लीलासमुद्भवैः ।
बबन्ध यच्छिखापाशं कैशिकी तत्र निर्मिता ॥ १३ ॥
संरम्भावेगबहुलैर्नानाचारीसमन्वितैः ।
नियुद्धकरणैरङ्गैरुत्पन्नाऽऽरभटी ततः ॥ १४ ॥
यां यां देवः समाचष्टे क्रियां वृत्तिसमुद्भवाम् ।
तां तदर्थानुगैर्जल्पैर्द्रुहिणः प्रत्यपूजयत् ॥ १५ ॥
यदा हतौ तावसुरौ हरिणा मधुकैटभौ ।
ततोऽब्रवीत् पद्मयोनिर्नारायणमरिन्दमम् ॥ १६ ॥
अहो विचित्रैर्वल्गितैः स्फुटैः सुविशदैरपि ।
अङ्गहारैः कृतं देव त्वया दानवनाशनम् ॥ १७ ॥
तस्मादयं सर्वलोके नियुद्धः समयः शुभः ।
सर्वशस्त्रविमोक्षेषु न्यायसञ्ज्ञो भविष्यति ॥ १८ ॥
न्यायसमुत्थितैस्त्रिचैरङ्गहारैर्विभूषितम् ।
यस्माद् युद्धं कृतं ह्येतत् तस्मान् न्यायाः प्रकीर्तिताः ॥ १९ ॥
ततो वेदेषु निक्षिप्ता द्रुहिणेन महात्मना ।
पुनरिष्टसुजातेन नानाचारीसमाकुले ॥ २० ॥
पुनर्नाट्यप्रयोगेन नानाभावसमन्विताः ।
वृत्तिसञ्ज्ञा वृता ह्येताः काव्यबन्धसमाश्रिताः ॥ २१ ॥

वल्गितैस्तस्य देवस्य यथं यथादृशं कृतम् ।
ऋषिभिस्तादृशी वृत्तिः कृता याऽप्यङ्गसम्भवा ॥ २२ ॥
नाट्यवेदसमुत्पन्ना वाचां याऽभिनयान्विताः ।
मया काव्यकृतं हेतोः प्रक्षिप्ता द्रुहिणाज्ञया ॥ २३ ॥
ऋग्वेदे भारती क्षिप्ता यजुर्वेदे च सात्त्वती ।
कैशिकी सामवेदे च शेषा चाऽथर्वणी तथा ॥ २४ ॥
या वाक्प्रधाना नृवरप्रयोज्या
स्त्रीवर्जिता संस्कृतपाठ्ययुक्ता ।
स्वनामधेयैर्भरतैः प्रयुक्ता
तां भारतीं वृत्तिमुदाहरन्ति ॥ २५ ॥
भेदास्तस्यास्तु विज्ञेयाश्चत्वारो द्रवमागता ।
प्ररोचना मुखं चैव वीथी प्रहसनस्तथा ॥ २६ ॥
प्रजाभ्युदयिनी चैव मङ्गल्या विजयावहा ।
सर्वपापप्रशमनी पूर्वरङ्गप्ररोचिनी ॥ २७ ॥
नटी विदूषको वाऽपि पारिपार्श्वक एव वा ।
सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥ २८ ॥
चित्रैर्वाक्यैः स्वकार्योत्थैर्वीथ्यङ्गैरन्यथापि वा ।
उद्घात्यकं कथोद्घातः प्रयोगातिशयस्तथा ॥ २९ ॥
प्रवृत्तकावलगिते आमुखाङ्गानि पञ्च वै ।
उद्घात्यकावलगिते वीथ्यङ्गे तु मयोदिते ॥ ३० ॥
शेषाणां लक्षणमहं व्याख्यास्याम्यनुपूर्वशः ।
सूत्रधारस्य वाक्यं वा यत्र वाक्यार्थमेव च ॥ ३१ ॥

गृहीत्वा प्रविशेत् पात्रं कथोद्घातः प्रकीर्तितः।
प्रयोगेऽत्र प्रयोगं तु सूत्रभृद् यत्र योजयेत् ॥ ३२ ॥
ततश्च प्रविशेत् पात्रं प्रयोगातिशयो हि सः।
कालं प्रवृत्तमाश्रित्य सूत्रभृद् यत्र वर्णयेत् ॥ ३३ ॥
तदाश्रयस्य पात्रस्य प्रवेशस्तत् प्रवृत्तकम्।
एषामन्यतमं श्लिष्टं योजयित्वाऽर्थयुक्तिभिः ॥ ३४ ॥
पात्रग्रन्थैरसम्बाधं प्रकुर्यादामुखं ततः।
एवमेतद् बुधैर्ज्ञेयमामुखं विविधाश्रयम्।
लक्षणं पूर्वमुक्तं तु वीथ्याः प्रहसनस्य च ॥ ३५ ॥
इत्यष्टार्थविकल्पा वृत्तिरियं भारती मया प्रोक्ता।
सात्त्वत्यास्तु विधानं लक्षणयुक्त्या प्रवक्ष्यामि ॥ ३६ ॥
या सात्त्वतेनेह गुणेन युक्त्या
न्यायेन वृत्तेन समन्विता च।
हर्षोत्कटा संहृतशोकभावा
सा सात्त्वती नाम भवेत् तु वृत्तिः ॥ ३७ ॥
वागङ्गाभिनयवती सत्त्वोत्थानवचनप्रकरणेषु।
सत्त्वाधिकारयुक्ता विज्ञेया सात्त्वती वृत्तिः ॥ ३८ ॥
वीराद्भुतरौद्ररसा विज्ञेया ह्यल्पकरुणशृङ्गारा।
उद्धतपुरुषप्राया परस्पराधर्षणा चैव ॥ ३९ ॥
उत्थापक उपरिवर्त्तकश्च संलापकश्च सङ्घात्यः।
चत्वारश्चैव भेदा विज्ञेया नाट्यतत्त्वज्ञैः ॥ ४० ॥
अहमुत्थास्याऽम्येवं त्वं तावद् दर्शयात्मनः शक्तिम्।

इति संहर्षसमाश्रयमुत्थितमुत्थापको ज्ञेयः ॥ ४१ ॥
उत्थानसमारोहानयानुत्सृज्य योऽर्थयोगवशात् ।
अन्यानर्थान् भजते स चाऽपि परिवर्तको ज्ञेयः ॥ ४२ ॥
सामबीजानिरामर्षीऽपि लापो सल्लापको नाम ।
मन्त्रार्थकार्यशक्त्या दैववशादात्मदोषयोगाद् वा ॥ ४३ ॥
सङ्घातभेदजननं तज्ज्ञैः सङ्घातको ज्ञेयः ।
इत्यष्टार्धविकल्पा वृत्तिरियं सात्त्वती मया प्रोक्ता ॥ ४४ ॥
कैशिक्यास्त्वथ लक्षणमतः परं सम्प्रवक्ष्यामि ।
या श्लक्ष्णनेपथ्यविशेषचित्रा
स्त्रीपुंसयुक्ता बहुनृत्यगीता ।
कामोपभोगप्रभवोपचारा
तां कैशिकीं वृत्तिमुदाहरन्ति ॥ ४५ ॥
नर्म सनर्मस्फञ्जो नर्मस्फोटोऽथ नर्मगर्भश्च ।
कैशिक्याश्चत्वारो भेदा ह्येते समाख्याताः ॥ ४६ ॥
आस्थापितशृङ्गारं विशुद्धकरणं निवृत्तवीररसम् ।
हास्यप्रवचनबहुलं नर्म त्रिविधं विजानीयात् ॥ ४७ ॥
ईर्ष्याक्रोधप्रायं सोपालम्भवचनानुविद्धं च ।
आक्षेपोपक्षेपकृतं सविडालम्भं स्मृतं नर्म ॥ ४८ ॥
नवसङ्गमसम्भोगो रतिसमुदायवेषवाक्यसंयुक्तः ।
ज्ञेयो नर्मस्फञ्जो ह्यवसानभयानकश्चैव ॥ ४९ ॥
विविधानां भावानां लवैर्लवैर्भूषितो बहुविशेषैः ।
असमग्राक्षिप्तरसो नर्मस्फोटोऽथ विज्ञेयः ॥ ५० ॥

विज्ञानगुणसम्भावादिभिर्नायको गुणैर्यत्र ।
प्रच्छन्नैर्व्यवहरते कार्यवशान् नर्मगर्भोऽसौ ॥ ५१ ॥
इत्यष्टार्धविकल्पा वृत्तिरियं कैशिकी मया प्रोक्ता ।
अत ऊर्ध्वमुद्धतरसामारभटीं सम्प्रवक्ष्यामि ॥ ५२ ॥
आरभटप्रायगुणा तथैव बहुकपटवञ्चनोपेता ।
दम्भानृतवचनवती त्वारभटी नाम विज्ञेया ॥ ५३ ॥
प्रस्तावपातप्लुतलङ्घितानि
छेद्यानि मायाकृतमिन्द्रजालम् ।
चित्राणि युद्धानि च यत्र नित्यं
तां तादृशीमारभटीं वदन्ति ॥ ५४ ॥
सङ्क्षिप्तकावपातौ च वस्तूत्थापनमथाऽपि सम्फेटः ।
एते ह्यस्या भेदा लक्षणमेषां तु सम्प्रवक्ष्यामि ॥ ५५ ॥
अन्वर्थशिल्पयुक्तो बहुपुस्तोत्थापनचित्रनेपथ्यः ।
सङ्क्षिप्तवस्तुविषयो ज्ञेयः सङ्क्षिप्तको नाम ॥ ५६ ॥
भयहर्षसमुत्थानं विद्रवविनिपातसंभ्रमाचरणम् ।
क्षिप्रप्रवेशनिर्गममवपातमिमं विजानीयात् ॥ ५७ ॥
सर्वरससमासकृतं सविद्रमविद्रवाश्रयं वाऽपि ।
यस्माद् विभाषते यत् तद् वस्तूत्थापनं नाम ॥ ५८ ॥
संरम्भसम्प्रयुक्तो बहुयुद्धनियुद्धकपटनिर्भेदः ।
शस्त्रप्रहारबहुलः सम्फेटो नाम विज्ञेयः ॥ ५९ ॥
एवमेता बुधैर्ज्ञेया वृत्तयो नाट्यमातरः ।
रसप्रयोगमासां च कीर्त्यमानं निबोधत ॥ ६० ॥

हास्यशृङ्गारकरुणैः वृत्तिः स्यात् कैशिकी रसैः।
सात्त्वती चाऽपि विज्ञेया वीररौद्राद्भुताश्रया ॥ ६१ ॥
भयानके सबीभत्से रौद्रे चाऽऽरभटी भवेत्।
भारती चाऽपि विज्ञेया वीररौद्राद्भुताश्रया ॥ ६२ ॥
वृत्त्यन्त एषोऽभिनयो मयोक्तो वागङ्गसत्त्वप्रभवो यथावत्।
आहार्यमेवाऽभिनयप्रयोगं वक्ष्यामि नेपथ्यकृतं च भूयः ॥ ६३ ॥
इति भारतीये नाट्यशास्त्रे वागभिनये वृत्तिविकल्पो नाम
विंशतितमोऽध्यायः।

---

## अथ चतुस्त्रिंशत्तमोऽध्यायः।

अत ऊर्ध्वं प्रवक्ष्यामि प्रकृतीनां च लक्षणम्।
नायकानां च सर्वेषां चतुर्णामपि तत्त्वतः ॥ १ ॥
समासतस्तु त्रिविधा प्रकृतिः परिकीर्तिता।
स्त्रीणां च पुरुषाणां च उत्तमा मध्यमाधमाः ॥ २ ॥
नाट्ये चत्वार एवैते नायकाः परिकीर्तिताः।
मध्योत्तमायां प्रकृतौ नानालक्षणलक्षिताः ॥ ३ ॥
धीरोद्धतो धीरललितो धीरोदात्तस्तथैव च।
धीरप्रशान्तश्चैवेति नायका नाटकाश्रिताः ॥ ४ ॥
देवा धीरोद्धता ज्ञेयाः स्युर्धीरललिता नृपाः।
सेनापतिरमात्यश्च धीरोदात्ताः प्रकीर्तिताः ॥ ५ ॥

ब्राह्मणा वणिजश्चैव प्रोक्ता धीरप्रशान्तकाः।
एते तु नायका ज्ञेयाः काव्यबन्धेषु सर्वदा ॥ ६ ॥
नायिकाश्चैव वक्ष्यामि चतस्रः पुनरेव हि।
दिव्या च नृपपत्नी च कुलस्त्री गणिका तथा ॥ ७ ॥
एतास्तु नायिका ज्ञेया नानाप्रकृतिलक्षणाः।
धीराश्च ललिताश्चैव उदात्ता निभृतास्तथा ॥ ८ ॥
दिव्या राजाङ्गना ह्येता गुणैर्युक्ता भवन्ति हि।
उदात्ता निभृता चैव भवेत् तु कुलजाङ्गना ॥ ९ ॥
गणिका शिल्पकारी च उदात्तललिते स्मृते।
प्रेष्या चैव हि विज्ञेया सङ्कीर्णा प्रकृतावपि ॥ १० ॥
नपुंसकश्च विज्ञेयः सङ्कीर्णोऽधम एव च।
शकारश्चैव चेटश्च ये चाऽन्येऽप्यधमा नराः ॥ ११ ॥
सङ्कीर्णास्ते च विज्ञेया नाटके हि द्विजोत्तमाः।
एते ज्ञेयाः प्रकृत्या तु पुरुषस्त्रीनपुंसकाः ॥ १२ ॥
एतेषां चैव वक्ष्यामि विभागं शीललक्षणैः।
सर्वासां प्रकृतीनां तु प्रकारो द्विविधः स्मृतः ॥ १३ ॥
तत्र राजोपचारो यो भवेदाभ्यन्तरस्तु सः।
तस्माद् राजोपचारेषु पुनरभ्यन्तराश्रयम् ॥ १४ ॥
स्त्रीविभागं प्रवक्ष्यामि उपचारं तथैव च।
महादेवी तथा देवी स्वामिनी स्थायिनी तथा ॥ १५ ॥
भोगिनी शिल्पकारी च नाटकीयाऽथ नर्तकी।
अनुचारी तथाऽऽयुक्ता तथा च परिचारिका ॥ १६ ॥

तथा सञ्चारिणी चैव तथा प्रेक्षणकारिका ।
महत्तरा प्रतीहारी कुमारी स्थविरा तथा ॥ १७ ॥
आयुक्तिकास्तु भूपानामेष आभ्यन्तरो गणः ।
तत्र मूर्द्धाविसिक्ता च कुलशीलविभूषिता ॥ १८ ॥
समतुल्यवयस्था च मध्यस्था क्रोधवर्जिता ।
अभीष्टा नृपशीलज्ञा समदुःखसुखास्पदा ॥ १९ ॥
शान्तिस्वस्त्ययनैर्नित्यं भर्तृमङ्गलकाङ्क्षिणी ।
पतिव्रता क्षमायुक्ता अन्तःपुरहिते रता ॥ २० ॥
एभिर्गुणैस्तु संयुक्ता महादेवी प्रकीर्तिता ।
एभिरेव गुणैर्युक्ता बहुमानविवर्जिता ॥ २१ ॥
गर्विता राजपुत्री स्याद् रतिसम्भोगतत्परा ।
बाला नित्योज्ज्वलगुणा प्रतिपक्षेष्वसूयिनी ॥ २२ ॥
यौवनादिगुणोन्मत्ता सा देवीत्यभिधीयते ।
रूपिणी पद्मिनीजातिः सावधाना नृपाङ्गना ॥ २३ ॥
सेनापतिरमात्यानी दण्डिनी तत्पराश्रये ।
नतया नामतस्त्वेव स्वामिनीत्यभिसञ्ज्ञिता ॥ २४ ॥
शीलरूपगुणैर्या तु संयुक्ता नृपवल्लभा ।
स्वामिसत्कारसम्पन्ना स्वामिनीत्यभिसञ्ज्ञिता ॥ २५ ॥
रूपयौवनसम्पन्ना कर्कशा ललिता तथा ।
रतिसम्भोगकुशला *प्रतियज्ञेष्वसूयिनाम् ॥ २६ ॥

---

* प्रतिपक्षेष्वसूयिनीति समुचितः पाठः ।

दत्ताऽस्फुटा ह्युदात्ता च गन्धमाल्योज्ज्वला तथा।
नृपतिच्छन्दवृत्ता च सर्वदेर्ष्याविवर्जिता ॥ २७ ॥
उपस्थिता प्रमत्ता च त्यक्तालस्या ह्यनिष्ठुरा।
मान्यामान्यविशेषज्ञा स्थायिनी कथिता तथा ॥ २८ ॥
सुशीला लघुसम्माना मृदुर्नाऽत्युद्धता तथा।
मध्यस्था निभृता शान्ता भोगिनीति हि सा स्मृता ॥ २९ ॥
नानाकलाविशेषज्ञा नानाशिल्पविचक्षणा।
गन्धशिल्पविभागज्ञा लेख्यालेख्यविशारदा ॥ ३० ॥
शयनाशनयानज्ञा चतुरा मधुरा तथा।
दक्षा चिक्षा स्फुटाऽतीव्रा निभृता शिल्पकारिका ॥ ३१ ॥
ग्रहमोक्षलयज्ञा च रसभावविभाविका।
परभावेङ्गितज्ञा च आचार्यानुगता तथा ॥ ३२ ॥
चतुराऽभिनयज्ञा च ऊहापोहविशारदा।
निपुणा भाण्डवाद्येषु नाटकीया प्रकीर्तिता ॥ ३३ ॥
नानावाद्यप्रयोगज्ञा नृत्यगीतविचक्षणा।
सदा प्रगल्भा च तथा त्यक्तालस्या जितश्रमा ॥ ३४ ॥
समानता च नारीषु रूपयौवनकान्तिषु।
न दृश्यते गुणैर्युक्ता नर्तकी सा प्रकीर्त्तिता ॥ ३५ ॥
सर्वावस्थाप्रचारेषु अनुगच्छति या नृपम्।
विज्ञेया नामतः सा तु नृपतेरनुचारिका ॥ ३६ ॥
भाण्डागारे नियुक्ता च आयुधागार एव च।
ओषधीफलमूलेषु वाजेषु स्वावृता तथा ॥ ३७ ॥

गन्धाभरणवस्त्रेषु आख्यानकथनेषु च ।
बह्वर्थेषु नियुक्ता या आयुक्ता इति सा स्मृता ॥ ३८ ॥
छत्रशय्यासने युक्ता तथा व्यञ्जनकर्मणि ।
संवाहने च गर्वे च तथा चैव प्रसाधने ॥ ३९ ॥
तथाऽऽभरणसंयोगे माल्यसङ्ग्रहणे तथा ।
विज्ञेया नामतः सा तु नृपतेः परिचारिका ॥ ४० ॥
नानाकक्षादिचारिण्यस्तथोपवनसञ्चराः ।
देवतायतनक्रीडाप्रासादपरिसञ्चराः ॥ ४१ ॥
यत्नेषु च नियुक्ता यास्तथा च विविधाश्रये ।
सञ्चारिकास्तु विज्ञेया नाट्यज्ञैरुपचारतः ॥ ४२ ॥
प्रेङ्खणैः कामसंयुक्तैर्गुह्यागुह्यसमुत्थितैः ।
याऽतियुक्ता बुधैः सा तु ज्ञेया प्रेङ्खणकारिका ॥ ४३ ॥
सर्वान्तःपुररक्षायामाशीःस्वस्त्ययनादिभिः ।
या नित्यमभिनन्दन्ति ज्ञेयास्तास्तु महत्तराः ॥ ४४ ॥
सन्धिविग्रहसम्बन्धं नानाकार्यसमुत्थितम् ।
निवेदयन्ति याः कार्यं प्रतिहार्यस्तु ताः स्मृताः ॥ ४५ ॥
अप्राप्तरतिसम्भोगा असम्भ्रान्ता अनुद्भटाः ।
निभृता याः सलज्जाश्च ताः कुमार्य इति स्मृताः ॥ ४६ ॥
पूर्वराजनयाभिज्ञाः सर्वराजसु पूजिताः ।
पूर्वराजोपचारज्ञा वृद्धास्ता इति कीर्तिताः ॥ ४७ ॥
समासाल्लक्षणं तासां प्रवक्ष्यामि द्विजोत्तमाः ।
या नियोज्या नियोगेषु प्रयोगेषु तथैव हि ॥ ४८ ॥

अनुद्धटा ह्यसम्भ्रान्ताः स्ववेषाचारनिष्ठुराः ।
शान्ता दान्ताः सुशीलाश्च जितक्रोधा जितेन्द्रियाः ॥ ४९ ॥
आकाशा निभृतास्त्वैव स्त्रीदोषैश्च विवर्जिताः ।
ता नियोगे नियोक्तव्या वनिता मदवर्जिताः ॥ ५० ॥
यत् स्यान् नपुंसकं नाम तृतीया प्रकृतिस्तु सा ।
सा ह्यन्तःपुरसञ्चारे योज्या पार्थिववेश्मनि ॥ ५१ ॥
स्नातकाः कञ्चुका ये च तथा वर्षधराश्च ये ।
ये स्थायिकाश्च निर्मुण्डाः कचास्थानेषु योजयेत् ॥ ५२ ॥
अपुमांसस्तु पुरुषा ये च स्त्रीभोगवर्जिताः ।
एते त्वन्तःपुरचराः कार्या नित्यं हि नाटके ॥ ५३ ॥
वस्त्वन्ते स्नातकं कुर्यादार्यमाचारसंयुतम् ।
प्रेरणे चार्यसंयुक्ते कञ्चुकीयान् नियोजयेत् ॥ ५४ ॥
तथा वर्षधरांश्चैव कामचारेषु योजयेत् ।
उपस्थायिकनिर्मुण्डाः स्त्रीणां प्रेषणकारणे ॥ ५५ ॥
मानकार्येषु नारीणां नियुञ्जीतानुचारिकाः ।
सर्ववृत्तान्तयोगज्ञं नाट्यागारे नियोजयेत् ॥ ५६ ॥
ये त्वल्पसत्त्वाः कुशलाः क्लीबाश्च स्त्रीस्वभाविनः ।
जात्या न दुष्टाः कार्ये तु ते वै वर्षधराः स्मृताः ॥ ५७ ॥
नपुंसका ये पुरुषाः स्त्रीस्वभावेन वर्जिताः ।
निर्मुण्डा नामतो ज्ञेयाः कामविज्ञानवर्जिताः ॥ ५८ ॥
ये विद्यासत्यसम्पन्नाः कामदोषविवर्जिताः ।
ज्ञानविज्ञानकुशलाः कञ्चुकीयास्तु ते स्मृताः ॥ ५९ ॥

एतदेव दशविधं प्रोक्तमन्तःपुरं मया ।
अतःपरं प्रवक्ष्यामि बाह्यं पुरुषसञ्चरम् ॥ ६० ॥
राजा सेनापतिश्चैव कुमारो मन्त्रिणस्तथा ।
सचिवाः प्राड्विवाकाश्च प्रयोगाधिकृतास्तथा ॥ ६१ ॥
एते चाऽन्ये च बहवः सभास्तारा नृपस्य तु ।
विभागमेषां वक्ष्यामि लक्षणं च पृथक् पृथक् ॥ ६२ ॥
शीलवान् बुद्धिसम्पन्नः सत्यवादी जितेन्द्रियः ।
दक्षः प्रगल्भः श्रुतिमान् विक्रान्तो धृतिमान् शुचिः ॥ ६३ ॥
दीर्घदर्शी महोत्साहः कृतज्ञः प्रियवानपि ।
लोकपालव्रतधरः शूरो धीरः क्षमान्वितः ॥ ६४ ॥
उत्थितश्चाऽप्रमत्तश्च वृद्धसेव्यर्थशास्त्रवित् ।
नानानयप्रचारज्ञ ऊहापोहविचक्षणः ॥ ६५ ॥
परभावेङ्गितज्ञश्च षाड्गुण्येनाऽप्यलङ्कृतः ।
नानाशास्त्रार्थतत्त्वज्ञो नानाशिल्पप्रयोजकः ॥ ६६ ॥
स्थानवृद्धिक्षयज्ञश्च पररन्ध्रे विचक्षणः ।
कृतज्ञोऽव्यसनी चैव गुणैरेतैर्भवेन् नृपः ॥ ६७ ॥
शीलवान् सत्यसम्पन्नस्त्यक्तालस्यः प्रियंवदः ।
पररन्ध्रविधिज्ञो यो यात्राकालविशेषवान् ॥ ६८ ॥
अर्थशास्त्रार्थतत्त्वज्ञो ह्यनुरक्तः कुले वृतः ।
देशवित् कालविच् चैव भवेत् सेनापतिर्गुणैः ॥ ६९ ॥
कुलीनो बुद्धिसम्पन्नः श्रुतिनीतिविशारदः ।
स्वदेशास्थानुरक्ताश्च शुचयो धार्मिकास्तथा ॥ ७० ॥

अमात्या मन्त्रिणश्चैव गुणैरेतैर्भवन्ति हि।
व्यवहारार्थतत्त्वज्ञा बुद्धिमन्तो बहुश्रुताः॥ ७१॥
मध्यस्था धार्मिका रक्ताः कार्याकार्यविचक्षणाः।
क्षान्ता दान्ता जितक्रोधा नोद्धताः समदर्शिनः॥ ७२॥
ईदृशाः प्राड्विवाकाश्च स्थाप्या धर्मायनेष्वपि।
उत्थिताश्चाप्रमत्ताश्च त्यक्तालस्या जितक्लमाः॥ ७३॥
स्निग्धाः क्षान्ता विनीताश्च मध्यस्था निपुणास्तथा।
नयज्ञा विनयज्ञाश्च ऊहापोहविचक्षणाः॥ ७४॥
नानारूपैः समायुक्ता गुणैरेतैर्भवन्ति हि।
बृहस्पतिमतादेषां गुणानां प्रविभावकम्॥ ७५॥
विज्ञेयश्चाऽपि कर्मज्ञैः सभास्तारादिकल्पनम्।
अत्रोच्यते यथा नाट्यमाहार्यगुणसंश्रयम्॥ ७६॥
कथं राजगुणाः कार्या नटैरल्पपरिच्छदैः।
अत्रोच्यते यदा लोके नाट्यधर्माः प्रवर्तिताः॥ ७७॥
तदैव सर्वं सम्पन्नं नाट्यमेतन् मया कृतम्।
वर्णकैश्छादितस्तत्र भूषणैश्चाऽप्यलङ्कृतः॥ ७८॥
गाम्भीर्यौदार्यसम्पन्नो राजवत् तु भवेन् नटः।
सप्तद्वीपाग्रा स्वैव मध्यमेको नटो भवेत्॥ ७९॥
वर्णकैश्छादितेनेह कार्यं लय विचेष्टितम्।
आचार्यबुद्ध्या शास्त्रा च सौष्ठवाङ्गपुरस्कृतः॥ ८०॥
राजवद् भरतस्तस्माद् राजाऽपि नटवद् भवेत्।
यथा नटस्तथा राजा यथा राजा तथा नटः॥ ८१॥

उभाभ्यां भावसम्पन्तिः समलीलाङ्गसौष्ठवा।
यथाऽऽचार्योपदेशेन रङ्गशोभी भवेन् नटः॥ ८२॥
एवं स्वभावतो राजा नित्यमेवोद्धतो भवेत्।
दिव्यानां यः परीवारः पार्थिवानां भवेदिह॥ ८३॥
नाटके सम्प्रयोक्तव्यो वेषभाषाक्रियान्वितः।
यादृशं यस्य यद् रूपं प्रकृत्या तस्य तादृशम्॥ ८४॥
वेषे वेषविधानेन कर्तव्यं च प्रभुं पुनः।
एवं राजोपचारेषु कार्यः पुरुषसङ्ग्रहः॥ ८५॥
अत ऊर्ध्वं प्रवक्ष्यामि नानापुरुषलक्षणम्।
नानाशीलगुणे लोके उत्तमाधममध्यमे॥ ८६॥
प्रयोक्तव्याः पृथग् भावैर्विज्ञेया प्रकृतिर्बुधैः।
नानाशिल्पादिसम्पन्ना ज्ञानवन्तो जितेन्द्रियाः॥ ८७॥
लोके तु ये विशेषज्ञा धर्माधर्मविचक्षणाः।
शास्त्रेतिहासकुशलाः शीलवृत्तव्यवस्थिताः॥ ८८॥
अहिंसासत्त्वसम्पन्नाः प्रकृत्या तूत्तमाः स्मृताः।
लोकोपचारतत्त्वज्ञाः शिल्पशास्त्रविचक्षणाः॥ ८९॥
मध्यप्रायगुणोपेताः प्रकृत्या मध्यमाः स्मृताः।
रूक्षवाक्या दुराचारा निःसत्त्वाः स्वल्पबुद्धयः॥ ९०॥
क्रोधना घातकाश्चैव *कृतज्ञाः सर्वदर्शिनः।
वृथारम्भप्रसन्नाश्च यत्किञ्चिद् वादनात्मकाः॥ ९१॥

---

* कृतघ्ना इति कृतघ्ना इति वा पाठो युक्तः।

पिशुनाः पापनिरताः स्त्रीलोल्याः कलहप्रियाः।
मान्यामान्यविशेषाणामनभिज्ञाश्च तस्कराः॥ ९२॥
एभिर्दोषैश्च संयुक्ताः प्रकृत्यैवाऽधमाः स्मृताः।
एवं तु शीलतो ज्ञेया प्रकृतिस्त्रिविधा बुधैः॥ ९३॥
अत ऊर्द्ध्वं प्रवक्ष्यामि प्रयोक्तॄणां तु तद्गुणान्।

तत्र सूत्रधारगुणान् वक्ष्यामः। अस्याऽऽदित एव तावल्लक्षणज्ञता अहीनो वाक्संस्कारस्तथा गीतकालविधानज्ञता स्वरवादित्रतत्त्ववेदनं च।

चतुरातोद्यकुशलः शस्त्रकर्मप्रतिष्ठितः।
नाना च खण्डकार्यज्ञो नीतिशास्त्रार्थवित् तथा॥ ९४॥
वेश्योपचारनिपुणः काव्यशास्त्रविचक्षणः।
नानागतिप्रचारज्ञो रसभावविशारदः॥ ९५॥
नाट्यप्रयोगकुशलो नानाशिल्पसमन्वितः।
छन्दोविधानतत्त्वज्ञः सर्वशास्त्रविचक्षणः॥ ९६॥
ग्रहनक्षत्रतत्त्वज्ञो देशव्याहारतत्त्ववित्।
पृथिवीद्वीपवर्षाणां पर्वतानां जनस्य च॥ ९७॥
प्रमाणचरितज्ञश्च राजवंशप्रसूतिवित्।
श्रोता शास्त्रार्थकार्याणां श्रुत्वा चैवाऽवधारकः॥ ९८॥
अवधार्योपदेष्टा च श्रेयोक्तावोपदेशने*।
एवङ्गुणस्तथाऽऽचार्यः सूत्रधारो विधीयते॥ ९९॥
स्वाभाविकान् गुणांश्चैव गदतो मे निबोधत।

* श्रेयोवक्त्रोपदेशने इति भवितुमर्हति।

स्मृतिमान् मतिमान् धीर उदारः स्थिरवाक् शुचिः ॥१००॥
अरोगो मधुरः क्षान्तो दान्तश्चैव प्रियंवदः ।
मद्यदोषविनिर्मुक्तः सत्यवाग् दक्षिणस्तथा ॥ १०१ ॥
अलुब्धः प्रतिमन्ता च स्वाभाविकगुणा अमी ।
सूत्रधारगुणैरेव किञ्चिदूनैः समन्वितः ॥ १०२ ॥
मध्यमप्रकृतिस्तज्ज्ञैर्विज्ञेयः पारिपार्श्वकः ।
उज्ज्वलो रूपवांश्चैव दृष्टोपकरणक्रियः ॥ १०३ ॥
मेधावी च विधानज्ञः स्वकर्मकुशलो दृढः ।
सूत्रधारगुणैर्युक्ताः सर्व एव प्रयोगिणः ॥ १०४ ॥
वेश्योपचारकुशलो मधुरो दक्षिणः कविः ।
ऊहापोहक्षमो वाग्मी चतुरश्च विटो भवेत् ॥ १०५ ॥
शास्त्रार्थतत्त्ववेदी च निपुणो दैशिकेषु च ।
उज्ज्वलवस्त्राभरणः क्रुध्यत्यनिमित्ततः प्रसीदति च ॥१०६॥
अधमो मागधभाषी भवति शकारो बहुविकारः ।
वामनो दन्तुरः कुब्जो द्विजन्मा विकृताननः ॥ १०७ ॥
खलत्क्तिः पिङ्गलाक्षः संदिधेयो विदूषकः ।
कलाप्रियो बहुकथो विरूपो गन्धसेवकः ॥ १०८ ॥
मान्यामान्यविशेषज्ञः खेटो ह्येवंविधः स्मृतः ।
एवं गुणैश्च संयुक्तो यत्नजैश्चेतरैस्तथा ॥ १०९ ॥
अतः परं प्रवक्ष्यामि स्त्रीणां च प्रकृतिं पुनः ।
मितभाषा विदग्धा च सलज्जा चाऽप्यनिष्ठुरा ॥ ११० ॥
कुलशीलगुणोपेता गुरूणां शासने रता ।

गाम्भीर्यधैर्यसम्पन्ना उत्तमा प्रकृतिः स्मृता ॥ १११ ॥

नानाशिल्पप्रयोगज्ञा नाट्ययोगविचक्षणा ।
कलोपयोगे चाऽऽर्या तु शुश्रूषाऽभिरता सदा ॥ ११२ ॥

लीलया भावहावाभ्यां सत्त्वेन विनयेन च ।
माधुर्येण च संयुक्ता चतुःषष्टिकलान्विता ॥ ११३ ॥

तत्रोपचारकुशला स्त्रीदोषैः परिवर्जिता ।
प्रियवादी प्रियकथा स्फुटा दक्षा जितश्रमा ॥ ११४ ॥

एभिर्गुणैस्तु संयुक्ता गणिका परिकीर्तिता ।
रूपगुणशीलयौवनसुवर्णमाल्याभरणसम्पन्ना ॥ ११५ ॥

विशदा स्निग्धा मधुरा पेशलशुभरक्तकण्ठा च ।
भाण्डाद्यैश्च सुभिता लयतालज्ञा रसैश्च सम्पन्ना ॥ ११६ ॥

एवंविधगुणयुक्ता कर्तव्या नायिका तज्ज्ञैः ।
समागतासु नारीषु वयोरूपवतीषु च ॥ ११७ ॥

नटविश्वाससमायुक्ता सहस्रेष्वपि नर्तकी ।
अस्थानहासिनी रूक्षा अविद्धगतिचेष्टिता ॥ ११८ ॥

दीर्घरोषा च दीना च तथा चाऽनिभृतोद्भटा ।
सर्वदोषाभिसंयुक्ता गन्धमाल्योपशोभिता ॥ ११९ ॥

एवंविधा प्रकर्तव्या प्रकृष्टा प्रकृतिर्बुधैः ।
एवमेताः प्रकृतयो विज्ञेया नाट्यसंश्रयाः ॥ १२० ॥

कृतवेषाभिजात्याश्च सर्वा एव प्रयोक्तृभिः ।
अतऊर्ध्वं प्रवक्ष्यामि लक्षणं भूमिकास्वपि ॥ १२१ ॥

इति श्रीभारतीये महानाट्यशास्त्रे प्रकृत्यध्यायो नाम चतुस्त्रिंशत्तमोऽध्यायः समाप्तः ॥ ० ॥

---